हो तो दीर्घायु होता है।। मित्रेश पञ्चमेश, पञ्चमभाव मे अपने ही नवांश मे हो तथा लग्नेश और अष्टमेश भी हो तो दीर्घायु होता है।। लग्नेश, अष्टमेश तथा दशमेश और शनि केन्द्र, त्रिकोण या लाभस्थान मे हो तो दीर्घायु होती है।। इनमे जो बलवान् हो उसके अनुसार आयु कहे।। अष्टमाधिपति केन्द्र मे हो लग्नेश बलहीन हो तो ३० या ३२ वर्ष की परमायु होती है।। अष्टमेश नीच राशि मे हो, अष्टम भाव मे पापग्रह हों और लग्नेश बलहीन हो तो अल्पायु होती है।। अष्टमेश पापयुक्त हो, अष्टमभाव मे पापग्रह हो तथा १२वे भी पापग्रह हो तो जन्मके बाद ही मृत्यु होती है।। केन्द्र त्रिकोण मे पापग्रह हो तथा छठे, आठवे शुभग्रह हो और अष्टमेश नीच का होकर लग्न मे हो तो जन्म के बाद ही मृत्यु होती है।। पचमभाव पापग्रह युक्त हो और अष्टमेश पापग्रह युक्त हो तथा अष्टमभाव मे पापग्रह युक्त हो तो अल्पायु होता है।। अष्टमेश अष्टम मे हो, चन्द्रमा पापयुक्त हो और शुभग्रह नही देखते हो तो एक महीने बाद मृत्यु होती है।। और शुभग्रह देखते हो तो मृत्यु नही होती।। लग्नेश उच्चराशि मे हो चन्द्रमा लाभ मे हो, आठवे स्थान मे बृहस्पति हो तो दीर्घायु होती है ।।१८९-२००।।

## अथ नवमभावफलम्

भाग्याधिनाथोऽपि च भाग्यकर्ता शुक्रोऽपि पापै सह चेत्त्रिषु स्यात् ।। त्रिषडादिभावेषु च भाग्यहीन केन्द्रत्रिकोणोपगतोऽतिभाग्यम् ।।२०१।। अनेन धर्म परिकल्पनीय पिता तु चिन्त्यो निजमातुलस्य ।। शुभे शुभस्थानगते शुभ स्याद्विपर्यये तत्र विपर्यय स्यात् ।।२०२।। भाग्यस्थिते वाहनराशिसस्थे शुक्रे च जीवे शुभराशियुक्ते ।। भाग्याधिपे कोणचतुष्टये वा बहुत्वदेशाभरण च यानम् ।।२०३।। भाग्यस्थानगते जीवे तदीशे केन्द्रसस्थिते ।। लग्नेशे बलसयुक्ते बहुभाग्याधिपो भवेत् ।।२०४।। भाग्येशे बलसयुक्ते भाग्ये भृगुसमन्विते ।। लग्नात्केन्द्रगते जीवे पितृभाग्यसमन्वित ।।२०५।। भाग्यस्थानाद्‌द्वितीये वा मूले भौमसमन्विते ।। भाग्येशे नीचराशिस्थे पिता निर्धन एव स ।।२०६।। भाग्येशे परमोच्चस्थे भाग्याशे जीवसयुते ।। लग्नाच्चतुष्टये शुक्रे पिता दीर्घायुरादिशेत् ।।२०७।। भाग्येशे केन्द्रभावस्थे गुरुणा च निरीक्षिते ।। तत्पिता वाहनैर्युक्तो राजा वा तत्समो भवेत् ।।२०८।। भाग्येशे कर्मभावस्थे कर्मेशे भाग्यराशिगे ।। कर्मेशाच्च धनाढ्यश्च कीर्तिमास्तत्पिता भवेत् ।।२०९।। परमोच्चाशगे सूर्ये भाग्येशे लाभसस्थिते ।। धर्मिष्ठो नृपवात्सल्य पितृपुण्यो भवेन्नर ।।२१०।।

### नवमं भावफल

भाग्यस्थान (नवम) का स्वामी भाग्य को बनानेवाला है तथा ग्रहो मे शुक्र भाग्यकर्ता है। यदि शुक्र पापग्रहो के साथ ३।६।११ अथवा अष्टम मे हो तो मनुष्य को भाग्यहीन करता है। और यदि केन्द्र या त्रिकोण १।४।७।१०।।५।९, मे हो तो भाग्यशाली बनाता है।। और इस नवमस्थान से धर्म का विचार करना और अपने मामा के पिता का विचार करना चाहिये।। नवमभाव मे शुभग्रह हो अथवा शुक्र शुभस्थान मे हो तो शुभ होता है। और इसके विपरीत अशुभ जानना।। शुक्र और बृहस्पति इन दोनो ग्रहो मे से एक या दोनो ही नवमस्थान मे या चतुर्थस्थान मे शुभग्रह तथा शुभराशि मे युक्त हो और नवमेश केन्द्र या त्रिकोण मे हो तो जमीन जायदाद, सम्पत्ति, सवारी आदि का सुख होता है।। भाग्येश केन्द्र मे हो और

भाग्यस्थान मे बृहस्पति हो एव लग्नेश बलवान हो तो जातक बडा भाग्यशाली होता है।। भाग्येश बलवान हो भाग्यस्थान मे शुक्र हो बलवान् गुरु केन्द्र मे हो तो पिता भी और आप भी भाग्यशाली होता है।। भाग्यस्थान से द्वितीय या चतुर्थ स्थान मे मगल हो तथा भाग्येश नीच राशि का हो तो पिता निर्धन ही होता है।। भाग्येश परमोच्च मे हो तथा भाग्यराशि के नवाश मे बृहस्पति हो तथा शुक्र केन्द्र मे हो तो पिता दीर्घायु होता है।। भाग्येश केन्द्रस्थान मे हो और बृहस्पति देखता हो तो जातक वाहनोसे युक्त राजा या राजा के समान होता है।। भाग्येश दशम मे हो और दशमेश भाग्यस्थान मे हो तो कर्मेश के प्रभाव स जातक का पिता धनी और यशस्वी होता है।। सूर्य परमोच्च मे हो तथा भाग्येश लाभस्थान मे हो तो पिता पुण्यात्मा राजमान्य होता है।।२०१-२१०।।

लग्नात्त्रिकोणगे सूर्ये भाग्येशे सप्तमस्थिते ।। गुरुणा सहिते दृष्टे पितृभक्तिसमन्वित ।।२११।। भाग्येशे धनभावस्थे धनेशे भाग्यराशिगे ।। द्वात्रिंशात्परतो भाग्य वाहन कीर्तिसभव ।।२१२।। लग्नेशे भाग्यराशिस्थे षष्ठेशे भाग्यराशिगे ।। अन्योन्यवैर बुवते जनक कुत्सितो भवेत् ।।२१३।। कर्मजे रिपुरध्रारि फभवने जीवे च भिक्षाशन ।। भाग्येशे यदि जन्मकालसमये प्राप्नोति दीक्षा रवि ।।२१४।। कर्माधिपेन सहितो विक्रमेशो विधिबल ।। नीचराशिविमूढस्थो योगो भिक्षाशनात्प्रभु ।।२१५।। षष्ठाष्टमव्यये भानू रध्रेशे भाग्यसयुते ।। व्ययेशे लग्नराशिस्थे षष्ठाशपचमे स्थिते ।।२१६।। जातस्य जननात्पूर्व जनकस्य मृतिर्भवेत् ।। रध्रस्थानगते सूर्ये रध्रेशे भाग्यनायके ।।२१७।। जातस्य प्रथमाब्दे तु पितुर्मरणमादिशेत् ।। व्ययेशे भाग्यराशिस्थे नीचाशे भाग्यनायके ।।२१८।।

लग्न से त्रिकोण ५।९ मे सूर्य हो तथा भाग्येश सप्तमभाव मे हो और गुरुयुक्त या दृष्ट हो तो जातक पिता का भक्त होता है।। भाग्येश धनभाव मे हो और धनेश भाग्यभाव मे हो तो ३२ वर्ष की उम्र के बाद भाग्योदय होता है और वाहन तथा कीर्ति होती है।। लग्नेश तथा षष्ठेश भाग्यस्थान मे हो तो पिता पुत्र का आपस मे वैर होता है और पिता दुष्टबुद्धि होता है।। यदि दशम भाव मे बुध हो और जन्मलग्न मे भाग्येश सूर्य हो, ६।८।१२ स्थान मे गुरु हो तो भिखारी होता है।। तृतीयभाव का स्वामी दशमेश के साथ नीचराशि और मूढ अवस्था मे हो तो भिक्षाटन करता हुआ भगवान् के भरोसे पर जीता है।। सूर्य- ६।८।१२ म हो, अष्टमेश भाग्यस्थान मे हो और व्ययेश लग्न के छठे पचमाश मे हो , तो जातक के जन्म के पहिले ही पिता की मृत्यु होती है। अष्टमभाव मे सूर्य हो तथा अष्टमेश और नवमेश एक ही हो (जैसे मिथुन लग्न मे शनि) तो जातक के पहिले वर्ष मे ही पिता की मृत्यु होती है।। व्ययेश ही भाग्यस्थान मे हो, भाग्येश परमनीच का हो।।२११-२१८।।

तृतीये षोडशे वर्षे जनकस्य मृतिर्भवेत् ।। लग्नेशे नाशराशिस्थे रन्ध्रेशे भानुसयुते ।।२१९।। द्वितीये द्वादशे वर्षे पितुर्मरणमादिशेत् ।। भाग्याद्रन्ध्रगते राहौ भाग्याद्भाग्यगते रवौ ।।२२०।। षोडशेऽष्टादशे वर्षे जनकस्य मृतिर्भवेत् ।। भाग्याद्रध्रगते राहौ भाग्याद्भाग्यगते रवौ ।।२२१।। राहुणा सहिते सूर्ये चद्राद्भाग्यगते शनौ।।सप्तमैकोनविंशाब्दे तातस्य मरण

ध्रुवम् ॥२२२॥ भाग्येशे व्ययराशिस्थे व्ययेशे भाग्यराशिगे ॥ चतुश्चत्वारिवर्षान्त्ये पितुर्मरणमादिशेत् ॥२२३॥ रन्ध्रशे च स्थिते चद्रे लग्नेशे रन्ध्रसयुते ॥ पचत्रिंशैकचत्वारिवत्सरे पितृनाशनम् ॥२२४॥ पितृस्थानाधिपे सूर्ये मदभौमसमन्विते ॥ पचाशद्वत्सरे प्राप्ते जनकस्य मृतिर्भवेत् ॥२२५॥ भाग्यात्सप्तमगे सूर्ये भ्रातृसप्तमगस्तम ॥ षष्ठमे पचविंशाब्दे पितुर्मरणमादिशेत् ॥२२६॥ रन्ध्रजामित्रगे मदे मदाज्जामित्रगे रवौ ॥ त्रिंशैकविंशे षड्विंशे जनकस्य मृतिर्भवेत् ॥२२७॥

तो तीसरे या सोलहवे वर्ष मे पिता की मृत्यु होती है। लग्नेश अष्टमभाव मे हो, अष्टमेश के साथ मे सूर्य हो तो दूसरे या बारहवे वर्ष मे पिता की मृत्यु होती है। नवमस्थान से आठवे राहु और नौवे सूर्य हो तो सोलहवे या अठारहवे वर्ष मे पिता की मृत्यु हो। नवमभाव से आठवे राहु और नौवे सूर्य हो तथा राहु के साथ सूर्य हो और चन्द्रमा से नौवे शनि हो तो सातवे या १९ वे वर्ष मे पिता की मृत्यु होती है॥ भाग्येश व्ययभाव मे हो और व्ययेश भाग्यभाव मे हो तो २४ वे वर्ष मे पिता की मृत्यु होती है॥ चन्द्रमा सूर्यनवाश मे हो तथा लग्नेश आठवे भाव मे हो तो ३५ या ४१ वर्ष मे पिता की मृत्यु होती है॥ सूर्य दशमेश हो और शनि, मगलयुक्त हो तो पचासवे वर्ष मे पिता की मृत्यु होती है॥ भाग्यभाव से सूर्य सप्तम मे हो तथा तीसरे भाव से सातवे राहु हो तो छठे या २५वे वर्ष मे पिता की मृत्यु होती है॥ आठवे भाव से सातवे शनि हो और शनि से सातवे सूर्य हो तो २१ या २६ अथवा ३० वे वर्ष मे पिता की मृत्यु हो ॥ ॥२१९–२२७॥

भाग्येशे नीचराशिस्थे तदीशे भाग्यराशिगे ॥ षड्विंशगे त्रयस्त्रिंशे पितुर्मरणमादिशेत् ॥२२८॥ रव्यशकस्थिते चद्रे लग्नेशे रन्ध्रसयुते ॥ पचत्रिंशैकचत्वारिवत्सरे पितृनाशनम् ॥२२९॥ पितृस्थानाधिपे सूर्ये चन्द्रभौमसमन्विते ॥ पचाशद्वत्सरे प्राप्ते जनकस्य मृतिर्भवेत् ॥२३०॥ परमोच्चगते शुक्रे भाग्येशेन समन्विते ॥ भ्रातृस्थाने शनियुते बहुभाग्याधिपो भवेत् ॥२३१॥ गुरुणा सयुते भाग्ये तदीशे केन्द्रराशिगे ॥ त्रिंशद्वर्षात्पर चैव बहुभाग्य विनिर्दिशेत् ॥२३२॥ परमोच्चगते सौम्ये भाग्येशे भाग्यराशिगे ॥ षट्त्रिंशाच्च पर चैव बहुभाग्य विनिर्दिशेत् ॥२३३॥ लग्नेशे भाग्यराशिस्थे भाग्येशे लग्नसयुते ॥ गुरुणा सयुते द्यूने धनवाहनलाभकृत् ॥२३४॥ भाग्याद्व्ययगतो राहुर्भाग्येशे निधन गते ॥ भाग्येशे नरराशिस्थे भाग्यहीनो भवेन्नर ॥२३५॥ भाग्यस्थानगते मदे शशिना च समन्विते ॥ लग्नेशे नीचराशिस्थे भिक्षाशी च नरो भवेत् ॥२३६॥

भाग्येश नीचराशि मे हो और उस राशि का स्वामी भाग्यराशि मे हो तो २६ या ३३ वे वर्ष मे पिता की मृत्यु हो॥ सूर्य के नवाश मे चन्द्रमा हो तथा लग्नेश आठवे भाव मे हो तो ३५ या ४१वे वर्ष मे पिता की मृत्यु होती है॥ सूर्य दशमेश हो और चन्द्र मगलयुक्त हो तो ५० वे वर्ष मे पिता की मृत्यु होती है॥ शुक्र परमोच्च मे हो, भाग्येश युक्त हो, तृतीयभाव में शनि हो तो बहुत भाग्यवान् होता है॥ भाग्यस्थान मे गुरु हो, भाग्येश केन्द्र मे हो तो २० वर्ष के बाद भाग्योदय होता है॥ बुध परमोच्च मे हो, भाग्येश भाग्यराशि (स्वगृही) हो तो ३६ वे वर्ष मे पूर्ण भाग्योदय होता है॥ लग्नेश भाग्यराशि मे और भाग्येश लग्न मे तथा गुरु सप्तम मे हो तो

धन और सवारी का लाभ होता है॥ भाग्यस्थान में नीचे राहु हो और भाग्यराशि स्वामी पुरुषराशि में अष्टमभाव में हो तथा लग्नेश नीच राशि में हो तो जातक का जीवन भिक्षा पर ही व्यतीत होता है॥ २२८-२३६॥

## अथ दशमभावफलम्

कर्माधिपो बलोनश्चेत्कर्मवैकल्यमादिशेत् ॥ सौरिः केन्द्रत्रिकोणस्थो ज्योतिष्टोमादियागकृत् ॥२३७॥ अत्रायुषश्चिन्तनं च कार्यं स्यात्कर्मणस्तथा ॥ शत्रुनीचगृहं त्यक्त्वा षष्ठाष्टमगृहं तथा॥२३८॥ दशमे पापसंयुक्ते लाभे पापसमन्विते ॥ दुष्कृतिं लभते मर्त्यः स्वजनानां विदूषकः ॥२३९॥ कर्मेशे नाशराशिस्थे कर्मेशे राहुसंयुते ॥ जनद्वेषी महामूर्खो दुष्कृतिं लभते नरः ॥ कर्मेशे द्यूनराशिस्थे मन्दभौमसमन्विते ॥२४०॥ द्यूनेशे पापसंयुक्ते शिश्नोदरपरायणः ॥ तुङ्गराशिं समाश्रित्य कर्मेशे गुरुसंयुते ॥२४१॥ भाग्येशे कर्मराशिस्थे मानैश्वर्यप्रतापवान् ॥ लाभेशे कर्मराशिस्थे कर्मेशे लग्नसंयुते ॥ तावुभौ केन्द्रगौ वापि सुखजीवनभाग् भवेत् ॥२४२॥ कर्मेशे बलसंयुक्ते मीनेगुरुसमन्विते ॥ वस्त्राभरणसौख्यादि लभते नात्र संशयः ॥२४३॥ लाभस्थानगते सूर्ये राहुभौमसमन्विते ॥ रविपुत्रेण संयुक्ते कर्मच्छेत्ता भवेन्नरः ॥२४४॥ मीने च राहौ यदि चोच्चकाशे भागीरथीस्नानफलं लभेन्नरः ॥२४५॥ माने च मीने यदि चार्कपुत्रे सन्यासयोगं प्रवदन्ति तस्य॥२४६॥ मीने जीवे भृगुयुते लग्नेशे बलसंयुते॥ स्वोच्चराशिगते चन्द्रे सम्यग्ज्ञानार्थवान् भवेत् ॥२४७॥ कर्मेशे लाभराशिस्थे लाभेशे लग्नसंस्थिते ॥ कर्मराशिस्थिते शुक्रे रत्नवान् स नरो भवेत् ॥२४८॥ केन्द्रत्रिकोणगे कर्मनाथे स्वोच्चसमाश्रिते ॥ गुरुणा सहिते दृष्टे कर्मसहितो भवेत् ॥२४९॥ कर्मेशे लग्नभावस्थे लग्नेशेन समन्विते॥ केन्द्रत्रिकोणगे चन्द्रे सत्कर्मनिरतो भवेत् ॥२५०॥ कर्मस्थानगते मन्दे नीचखेचरसंयुते ॥ कर्मेशे पापसंयुक्ते कर्महीनो भवेन्नरः ॥२५१॥ कर्मेशे घागराशिस्थे रन्ध्रेशे कर्मसंस्थिते ॥ पापग्रहेण संयुक्ते दुष्कर्मनिरतो भवेत् ॥२५२॥ कर्मेशे नीचराशिस्थे कर्मस्थे पापखेचरे॥ कर्मभात्कर्मगे पापे कर्मवैकल्यमादिशेत् ॥२५३॥ कर्मस्थानगते चन्द्रे तदीशे तत्त्रिकोणगे ॥ लग्नेशे केन्द्रभावस्थे सत्कीर्तिसहितो भवेत् ॥२५४॥ लाभेशे कर्मभावस्थे कर्मेशे बलसंयुते ॥ देवेन्द्रगुरुणा दृष्टे सत्कीर्तिसहितो भवेत् ॥२५५॥ कर्मस्थानाधिपे भाग्ये लग्नेशे कर्मसंयुते ॥ लग्नात्पञ्चमगे चन्द्रे ख्यातिकीर्ती विनिर्दिशेत् ॥२५६॥

### दशमभाव फल

दशमेश बलहीन हो तो कर्म (क्रियाशक्ति) में विकलता होती है। सूर्य केन्द्र या त्रिकोण में हो तो 'ज्योतिष्टोम' आदि यज्ञ करनेवाला होता है॥ इस दशमस्थानसे आयुका विचार तथा भले बुरे कर्मों का विचार करना चाहिये। कर्मेश के लिये शत्रुराशि और नीचराशि का त्याग तथा ६।८ भाव का त्याग उत्तम होता है॥ दशमभाव पापराशियुक्त हो और लाभस्थान में भी पापग्रह हो तो जातक कर्महीन होता है और स्वजनों का निन्दक होता है॥ दशमेश अष्टमभाव में हो और राहु साथ में हो तो जनद्वेषी, महामूर्ख और दुर्गतियुक्त होता है॥ दशमेश सातवें स्थान में हो, शनि मंगल युक्त हो और सप्तमेश पापग्रह युक्त हो तो जातक केवल कामी, भोगासक्त और पेट भरना ही परम पुरुषार्थ जानता है। दशमेश उच्च में तथा

बृहस्पति युक्त हो और भाग्येश दशम मे हो तो प्रतिष्ठा ऐश्वर्य और प्रतापवाला होता है। लाभेश दशमभाव मे हो और दशमेश लग्न मे हो अथवा ये दोनो केन्द्र मे हो तो जीवन सुखमय होता है।। दशमेश बलवान् होकर मीनराशि मे बृहस्पतियुक्त हो तो उत्तमवस्त्र, आभूषण आदि प्राप्त होता है।। लाभस्थान मे सूर्य, मगल, शनि, राहु हो तो जातक कर्मबन्धन का करनेवाला होता है।। राहु यदि मीन राशि मे अपने उच्चाश पर हो तो मनुष्य को भागीरथी गगास्नान का सुयोग प्राप्त होता है। शनि यदि मीनराशि का होकर दशमभाव मे स्थित हो तो सन्यास ग्रहण करता है।। मीनराशि मे स्थित गुरु, शुक्र से युक्त हो, लग्नेश बलवान् हो और चन्द्रमा उच्च राशि का हो तो ज्ञानी, धनी, मानी होता है।। दशमेश लाभराशि मे हो, लाभेश लग्न मे हो, दशमभाव मे शुक्र हो तो जातक रत्नवाला (जौहरी) होता है और दशमेश केन्द्र या त्रिकोण स्थान मे उच्च राशि मे हो और गुरु से युक्त या दृष्ट हो तो मनुष्य कर्मयोगी होतर है।। दशमेश लग्नेश के साथ लग्न मे हो और चन्द्रमा केन्द्र या त्रिकोण मे हो तो श्रेष्ठकर्मरत रहता है।। दशमभाव मे शनि नीचराशिगत ग्रह युक्त हो और दशमराशि के नवाश मे भी पापग्रह हो तो मनुष्य कर्महीन होता है।। दशमेश अपने नवाश मे हो, अष्टमेश दशमभाव मे हो और पापग्रह से युक्त हो तो जातक दुष्कर्म निरत रहता है। दशमेश नीचराशि मे हो और दशमभाव मे पापग्रह हो तथा दशमभाव से दशमभाव मे (अर्थात् लग्न से सप्तम मे) पापग्रह हो तो जातक का कोई काम पूरा नही होता।। दशमभाव मे चन्द्रमा हो दशमेश चन्द्रमा से त्रिकोण ९।५ मे हो लग्नेश दशम मे हो तो श्रेष्ठ कीर्तिवाला होता है।। लाभेश दशमभाव मे हो और दशमेश बलवान् हो गुरु की दृष्टि हो तो सुयशवाला होता है।। दशमेश नवम मे हो लग्नेश दशमभाव मे हो लग्न से पचमभाव मे चन्द्रमा हो तो जातक सत्कीर्ति से विख्यात होता है ।।२३७-२५६।।

## अथैकादशभावफलम्

लाभाधिपो यदा लाभे तिष्ठेत्केन्द्रत्रिकोणयो ।। बहुलाभ तदा कुर्यादुच्चसूर्यांशगोऽपि वा ।।२५७।। लाभेशे धनराशिस्थे धनेशे केन्द्रसस्थिते ।। गुरुणा सहिते भावे गुरुलाभ विनिर्दिशेत् ।।२५८।। षट्त्रिंशे वत्सरे प्राप्ते सहस्रद्वयनिष्कभाक्।। केन्द्रत्रिकोणगे भावेनाथे शुभसमन्विते ।। चत्वारिंशे तु सम्प्राप्ते सहस्रार्धं च निष्कभाक् ।।२५९।। लाभस्थाने गुरुयुते धने चन्द्रसमन्विते ।। भाग्यस्थानगते शुक्रे षट्सहस्राधिपो भवेत् ।।२६०।। लाभाच्च लाभगे जीवे गुरुचद्रेण सयुते ।। धनधान्याधिप श्रीमान्रत्नाद्याभरणैर्युत ।।२६१।। लाभेशे लग्नभावस्थे लग्नेशे लाभसयुते ।। त्रयस्त्रिंशे तु सम्प्राप्ते सहस्रनिष्कभाग्भवेत् ।।२६२।। धनेशे लाभराशिस्थे तदीशे धनराशिगे ।। विवाहात्परतश्चैव बहुभाग्य समादिशेत् ।।२६३।। धर्मेशे लाभराशिस्थे लाभेशे भ्रातृसस्थिते ।। भ्रातृभावाद्धनप्राप्तिर्दिव्याभरणसयुत ।।२६४।। लाभे पापे च व्यये पापयुक्ते दृष्टे पापे क्षेत्रयुक्तेन युते ।। लाभात्कामे लाभविध्रे निरर्थं सौम्यार्थं यो योक्षण विघ्ननाश ।।२६५।।

### एकादशभाव फल

लाभेश लाभ मे हो अथवा केन्द्र या त्रिकोण मे हो तो बहुत लाभ कारक होता है। उच्चराशि का और सिंह नवाश मे और भी श्रेष्ठ है।। लाभेश द्वितीय मे हो तथा द्वितीयेश

द्र मे हो और गुरु से युक्त हो तो अच्छा बडा लाभ होता है।। और छत्तीसवे वर्ष मे दो हजार निष्कमुद्रा (प्राचीन मुद्रा सुवर्ण की के हिसाब से तो बहुत होता है ) का लाभ होता है। लाभेश केन्द्र या त्रिकोण मे शुभग्रह युक्त हो तो चालीसवे वर्ष मे ५०० निष्क प्राप्त होता है।। लाभस्थान मे गुरु हो, द्वितीय मे चन्द्रमा हो भाग्यस्थान मे शुक्र हो तो छ हजार निष्कमुद्रा का धनी होता है।। लाभस्थानमे गुरु हो, बलवान् चन्द्रमासे युक्त हो तो जातक धनधान्ययुक्त धन–भूषणवाला होता है।। लाभेश लग्न मे और लग्नेश लाभ मे हो तो ३३ वे वर्ष मे एक हजार निष्क की प्राप्ति होती है।। धनेश लाभ मे और लाभेश धन मे हो तो विवाह के बाद ही भाग्यशाली होता है।। तीसरे भाव का स्वामी लाभस्थान मे हो और लाभेश तृतीय मे हो तो भ्राता से श्रेष्ठ वस्त्राभरणादि प्राप्त होते है।। लाभस्थान मे और व्ययभाव मे पापग्रह हो या दृष्टि हो तथा ग्रह स्वगृही होकर युक्त या द्रष्टा हो और लाभ से सप्तमभाव पर भी पापदृष्टि या युक्त हो तो लाभ मे विघ्न होता है और सौम्य दृष्टि हो तो विघ्नोका नाश होता है।।२५७-२६५।।

## अथ व्ययभावफलम्

चंद्रो व्ययाधिपो धर्मलाभमन्त्रेषु संस्थित ।। स्वोच्चस्ववर्गेनिजांशे वा लाभधर्मात्मजांशके ।। दिव्यागारादिपर्यंको दिव्यगंधैकभोगवान् ।।२६६।। परार्ध्यरमणो दिव्यवस्त्रमाल्यादिभूषण ।। परार्घ्यसयुतो वित्तो दिनानि नयति प्रभु ।। २६७।। एव स्वशत्रुनीचांशे अष्टांशे वाष्टमे रिपौ ।। सस्थित कुरुते जात कातासुख विवर्जितम् ।।२६८।। व्ययाधिक्यपरिक्लांत दिव्यभोगनिराकृतम् ।। स हि केन्द्रत्रिकोणस्थ स्वस्त्रियालंकृत स्वयम् ।।२६९।। एव भ्रात्रादिभावेषु तत्तत्सर्वं विचारयेत् ।। लग्नस्य पूर्वार्द्धं १०।११।१२।१।२।३। गता नभोगा फल प्रदद्युस्त्वपरोक्षक ते ।। परार्द्ध ४।५।६।७।८।९। यट्कोपगता परोक्ष फल वदतीति बुधा पुराणा ।।२७०।। व्ययस्थानगतो राहुर्भौमार्करविसयुत ।। तदीशेनार्कसयुक्ते नरके पतन भवेत् ।।२७१।। व्ययस्थानगते सौम्ये तदीशे स्वोच्चराशिगे ।। शुभयुक्ते शुभैर्दृष्टे परोक्ष स्यान्न सशय ।।२७२।। व्ययेशे पापसयुक्ते व्यये पापसमन्विते ।। पापग्रहेण सदृष्टे देशाद्देशातर गत ।।२७३।। व्ययेशे शुभराशिस्थे व्ययजें शुभसयुते ।। शुभग्रहेण सदृष्टे स्वदेशात्सचरो भवेत् ।।२७४।। व्यये मदादिसयुक्ते भूमिजेन समन्विते ।। शुभदृष्टैश्च सप्राप्ति पापमूलाद्धनार्जनम् ।।२७५।। लग्नेशे व्ययराशिस्थे व्ययेशे लग्नसयुते ।। भृगुपुत्रेण सयुक्ते धर्ममूलाद्धनव्ययम् ।।२७६।। अग्रे जात रविर्हन्ति पृष्ठे जात शनैश्चर ।। अग्रज पृष्ठज हति सहजस्थो धरासुत ।।२७७।। पत्नीस्थाने यदा राहु पापयुग्मेन वीक्षित ।। पत्नी योगस्थिता तस्य भूतापि म्रियतेऽचिरात् ।।२७८।। षष्ठे च भवने भौम सप्तमे राहुसम्भव ।। अष्टमे च यदा सौरिस्तस्य भार्या न जीवति ।।२७९।।

इति श्रीबृहत्पाराशरहोराशास्त्रे पूर्वखण्डे द्वादशभावविचारकथन नाम चतुर्दशोऽध्याय ।।१४।।

### व्ययभावफल

व्ययभाव का स्वामी होकर चन्द्रमा ५।९।११ मे स्थित हो और अपनी राशि या नवांश या उच्च का हो अथवा ५।९।११ वे नवांश मे हो तो अति सुन्दर मकान तथा अति सुन्दर भोग

विभूति वाला होता है। उम्र भर उत्तम भोग भोगता है। और यदि वही चन्द्रमा शत्रुराशि में नीच अंश वाला होकर ६।८ भाव में हो तो स्त्रीसुख से रहित करता है और अधिक खर्च से दु:खी तथा अच्छे पदार्थो से रहित रहता है।। और वह चन्द्रमा निर्बल होकर भी केन्द्र या त्रिकोण भावो मे हो तो अपनी स्त्री का सुख रहता है।। इसी प्रकार भ्राता, आदि के लिए उनके भाव से व्ययेश या चन्द्रमा से उपर्युक्त योगानुसार विचार करना चाहिये।। लग्न के पूर्वार्द्ध भाग (१।२।३।१०।११।१२) मे स्थित ग्रह प्रत्यक्ष फल देते है। और लग्न के परार्द्ध भाग मे स्थित ग्रह परोक्ष फल देते है (परार्द्धभाग की 'पट्कोप' सज्ञा है) यह प्राचीन आचार्यो का कथन है।। व्ययस्थान मे स्थित राहु सूर्य, मगल, शनि युक्त हो अथवा व्ययेश सूर्य युक्त हो तो (कुकर्म के फल से) नरक मे वास होता है।। व्ययस्थान मे बुध हो और उसका स्वामी उच्च राशि मे हो शुभग्रह युक्त और शुभदृष्ट हो तो यज्ञ, दान, धर्म आदि परोक्ष फलप्रद कर्म मे व्यय होता है।। व्यय स्थान और स्वामी पाप ग्रहो से युक्त अथवा दृष्ट हो तो देश देशान्तरो मे भ्रमण करता है। (एक स्थान पर जम कर नही रह सकता) व्ययेश शुभ राशि मे हो, व्ययभाव मे शुभ ग्रह युक्त हो या शुभग्रह देखते हो तो अपने देश मे ही सचरण (यातायात) करता रहता है।। व्ययभाव मे शनि मगल आदि हो परन्तु शुभग्रहो की दृष्टि हो तो पापजनक कार्यो से धनार्जन होता है।। लग्नेश ग्रह व्ययभाव मे हो और व्ययेश लग्न मे हो और शुक्र युक्त हो तो धर्म कार्यो मे धन का खर्च होता है।। (यह अगला श्लोक तीसरे भावफल मे होना चाहिये) तीसरे भाव मे रवि हो तो अपने जन्म के बाद जन्म लेनेवाले भाइयो को मारता है। और शनैश्चर अपने से पहिले जन्म लेनेवालो को मारता है। और मगल यदि तीसरे भाव मे स्थित हो तो बडे छोटे सभी भाइयो को मारता है।। भार्यास्थान मे जब राहु हो और दो पापग्रहो से दृष्ट हो तो उस जातक के प्रथम तो पत्नी हो नही, और हो भी तो जल्दी ही मृत्यु को प्राप्त होती है।। छठे भाव मे मगल, सप्तम मे राहु और अष्टम भाव मे शनि हो तो उसकी स्त्री जीवनलाभ नही कर सकती। (इन २ श्लोकोका सम्बन्ध सप्तम भावफलसे है) बारहो भावो का फल समाप्त ॥२६६-२७९॥

**इति श्री बृ०पा०हो०शा०पू०भा०प्र० द्वादशभावविचारकथन नामचतुर्दशोऽध्याय:॥१४॥**

**मैत्रेय उवाच–**

**परजात: कथ ज्ञेय: कथ ज्ञेय: शुभाशुभम् ॥ एतत्सर्व समाचक्ष्व ग्रहराशिफल शुभम् ॥१॥ पराशर उवाच–तुर्यचन्द्रेक्षित: खेट: शत्रुभिर्वा युतेक्षित ॥ परेण जायते बालो निश्चितं च यथा पशु: ॥२॥ त्रिषष्ठद्विसुताधीशो यदा लग्ने स्थितस्तदा ॥ तथापि परजात: स्याद् मृत्याद्यन्यसुता-दिभि ॥३॥ लग्ने क्रूरोऽस्तग: सौम्य कर्मस्थो रविनन्दन: ॥ अस्मिन्योगे च यो जातो जायते वर्णसंकर: ॥४॥ मूर्तौ चेन्दुबुध वृश्चिकये भूमिनंदनभार्गवौ ॥ यदा पंचदशावर्णे तदापि परबालक: ॥५॥ ग्रहराजे स्थिते लग्ने चतुर्थे सिंहिकासुत: ॥ स्वदेवरात्सुतोत्पत्तिर्जाता तस्या ॥ सशय: ॥६॥ लग्ने राहुधरापुत्रौ सप्तमे चंद्रभास्करौ ॥ नीचेन जायते बालो यदि राज्ञी भवेदपि ॥७॥ सूर्ययुक्तेन्दुलग्नस्थे सप्तमे भौमभास्करौ ॥ अस्मिन्योगे यदा जन्म परेणैव हि जायते ॥ केंद्र शून्य भवेद्यस्य सोऽपि जात: परेणहि ॥८॥ द्विषष्ठाष्टम्यरि: केषु ग्रहास्तिष्ठंति यस्य स: ॥ परजातो भवेत्सत्यमन्यत्रापि च संस्थित: ॥९॥ एकस्थाने यदाऽस्तेशलग्नेशौ सोऽपि जारज:**

॥१०॥ जीवो निशाकरं लग्नं नेक्षेतापि स जारजः ॥ जीववर्गविहीनांशे तदा योग. पराज्जने ॥११॥ द्विशत्रू चैककेन्द्रस्थावन्यग्रहविवर्जितौ ॥ तदापि परजातः स्यात्स्थिरलग्ने विशेषतः ॥१२॥ चतुर्थे दशमे लग्ने पापयुग् विधुसंस्थितः ॥ लग्नेशेनेक्षितं लग्नं तदापि परबालकः ॥१३॥ लग्नेशे संस्थिते लग्ने परजातः कदाचन ॥ भगोऽयं सर्वयोगानामिति ते कथितं मया ॥१४॥

### परजातयोगफल

मैत्रेय बोले--परजात (दूसरे के सयोग से जन्म होना) को किन योगो से जाने? और उसका शुभाशुभ फल कैसे जाने? ग्रह और भाव के फल सब कथन करिये।

पराशरजी ने कहा--चतुर्थ भावस्थ चन्द्र से दृष्ट और शत्रुग्रह से युक्त या दृष्ट तो बालक निश्चय परजात है। ३।६।२।५ इन स्थानो का कोई भी स्वामी लग्न मे हो तो भी उपर्युक्त योग मे परजात है और यह गर्भाधान नौकर आदि से हुआ है। लग्न मे पापग्रह, सातवे भाव मे अस्त बुध, दशम मे शनि इस योग मे हुआ बालक वर्णसकर है। लग्न मे चन्द्रमा, तीसरे मगल, शुक्र हो तो पन्द्रह आवरण मे भी परबालक है। लग्न मे शनि या सूर्य चतुर्थ भाव मे राहु हो तो अपने देवर से सन्तान की उत्पत्ति हुई है। लग्न मे राहु, मगल हो, सप्तम मे सूर्य चन्द्रमा हो तो रानी होने पर भी नीच जाति से बालक हुआ है। लग्न मे सूर्य, चन्द्रमा हो, सप्तम मे मगल सूर्य हो इस योग मे जन्म लेने वाला दूसरे से ही होता है। केन्द्रस्थान शून्य हो तो भी पर से ही जन्म है। २।६।८।१२ इन स्थानो मे अधिक तर ग्रह हो तो परजात है। अन्य स्थान मे १--२ ग्रह हो तो भी परजात है। लग्नेश और सप्तमेश दोनो एक स्थान मे हो तो परजात होता है। बृहस्पति यदि चन्द्रमा या लग्न को नही देखता हो तो भी जारज है। षड् वर्ग मे बृहस्पति का अश न हो तो जारज है। दो शत्रुग्रह किसी एक केद्र स्थान मे हो और अन्य ग्रह न हो तो भी परजात है, स्थिर लग्न मे विशेष करके योग बलवान् है। चतुर्थ, दशम तथा लग्न मे पापग्रह सहित चन्द्रमा हो और लग्नेश से लग्न दृष्ट हो तो भी परजात है। लग्नेश लग्न मे हो तो परजात कभी ही होता है। यह परजातभग सब कथित योगो का भजक है। सो मत्र तुमको कहा गया है ॥१--१४॥

## अथ लग्नेशद्वादशभावस्थितफलमाह

लग्नेशे लग्नगे पुन्सः स्वदेहस्वभुजाक्रमी ॥ मनस्वी चातिचांचल्यो द्विभार्यः परगोपि वा ॥१५॥ लग्नेशे धनगे लाभे सलाभः पीडितो नरः ॥ सुशीलो धर्मविन्मानी बहुदारगुणैर्युतः ॥१६॥ लग्नेशे सहजे षष्ठे सिंहतुल्यपराक्रमी ॥ सर्वसम्पद्युतो मानी द्विभार्यो मतिमान्सुखी ॥१७॥ लग्नेशे दशमे तुर्ये पितृमातृसुखान्वितः ॥ बहुभ्रातृयुतः कामी गुणसौंदर्यसयुतः ॥१८॥ लग्नेशे पचमे मानी सुतसौख्यं च मध्यमम्। प्रथमापत्यनाशः स्यात्क्रोधी राजप्रवेशकः ॥१९॥ लग्नेशः सप्तमे यस्य भार्या तस्य न जीवति ॥ विरक्तो वा प्रवासी वा दरिद्रो वा नृपोपि वा ॥२०॥ लग्नेशे व्ययमेऽष्टस्थे सिद्धविद्याविशारदः ॥ द्यूती चौरो महाक्रोधी परनार्यतिभोगकृत् ॥२१॥ लग्नेशे नवमे पुन्सो भाग्यवान् जनवल्लभः ॥ विष्णुभक्तः पटुर्वाग्मी पुत्रदारधनैर्युत. ॥२२॥

### लग्नेशद्वादशभावफल

लग्नेश जिसके लग्न मे हो वह अपनी कमाई करनेवाला, मनस्वी, चचल, दो स्त्री वाला होता है।। लग्नेश दूसरेभाव मे हो तो लाभ करनेवाला, पीडा भोगनेवाला, सुशील, धर्मात्मा, मानी तथा स्त्रीभावप्रधान होता है।। लग्नेश के तीसरे भाव मे होने से तथा छठे भाव मे होने से सिह के समान पराक्रमी, सर्वगुणसम्पन्न, मतिमान्, सुखी, मानी, दो स्त्रियोवाला होता है।। लग्नेश जिसके चौथे या दशम भाव मे हो–वह माता पिता का सुखवाला, भाइयो मे युक्त, कामी, सुन्दर, गुणी होता है।। लग्नेश पञ्चम मे हो तो मानी तथा कम सन्तानवाला, दूसरी स्त्री तथा क्रोधी और राजकार्य मे निपुण होता है।। लग्नेश सप्तम भाव में हो तो स्त्री सुख से वचित, विरक्त, प्रवासी, दरिद्र या राजा होता है।। लग्नेश बारहवे या आठवे हो तो अनेक विद्यायुक्त, जुवारी, चोर, क्रोधी, परदारगामी होता है।। लग्नेश नौवे हो तो भाग्यवान्, सबका प्रेमी, विष्णुभक्त, चतुर, वाचाल, स्त्री–पुत्र–धनयुक्त होता है ।।१५–२२।।

## अथ धनेशद्वादशभावस्थितफलमाह

**धनेशे धनगे सोऽथ धनवान् गर्वसयुत ।। भार्याद्वय त्रय चापि सुतहीन प्रजायते ।।२३।। धनेशे सहजे तुर्ये विक्रमी मतिमान् गुणी ।। परदाराभिगामी च लोभी वा देवनिदक ।।२४।। धनेशे रिपुगे शत्रोर्धन प्राप्नोति निश्चितम् ।। शत्रुतो वित्तनाश स्याद्गुदे चोर्वोर्भवेच्च रुक् ।।२५।। धनेशे सप्तमे वैद्य परजायाभिगामिक ।। जाया तस्य भवेद्वेश्या मातापि व्यभिचारिणी ।।२६।। धनेशे मृत्युगेहस्थे भूमिद्रव्य लभेद्ध्रुवम् ।। जायासौख्य भवेत्स्वल्प ज्येष्ठभ्रातृसुख न हि ।।२७।। धनेशे नवमे लाभे धनवानुद्यमी पटु ।। बाल्यरोगी सुखी पश्चाद्यावदायु समाप्यते ।।२८।। धनेशो दशमे यस्य कामी मानी च पडित ।। बहुदारधनैर्युक्त सुतहीनोपि जायते ।।२९।। धनेशो व्ययगे मानी साहसी धनवर्जित ।। जीविका नृपगेहाच्च ज्येष्ठपुत्रसुख न हि ।।३०।। धनेशे च तनौ पुत्री स्वकुटुबस्य कटक ।। धनवान्निष्ठुर कामी परकार्येषु तत्पर ।।३१।।**

### धनेश द्वादशभाव फल

धनेश (द्वितीयेश) द्वितीय मे हो तो धनवान्, अभिमानी हो,स्त्री दो या तीन तथा पुत्रहीन होता है।। धनेश तीसरे या चौथे भाव मे हो तो विक्रमी, बुद्धिमान्, गुणी, परस्त्रीगामी, लोभी, देवनिन्दक होता है।। धनेश छठे भाव मे हो तो शत्रु का धन प्राप्त होता है तथा बाद मे शत्रु के कारण ही नष्ट होता है तथा जाघ की बीमारी होती है।। धनेश सप्तम मे हो तो वैद्य, परस्त्रीसेवी तथा स्त्री और माता व्यभिचारिणी होती है।। धनेश अष्टम मे हो तो भूमि मे गडा हुआ धन प्राप्त होता है, स्त्रीसुख कम तथा बडे भाई का सुख नही होता।। धनेश नौवे या लाभ मे हो धनवान्, उद्यमी, चतुर, भोगी, बाल्य अवस्था का रोगी बाद मे सदा सुखी रहता है।। धनेश दशवे हो तो कामी, मानी, पडित, अनेक स्त्रीवाला, धनी तथा सन्तान हीन होता है।। धनेश व्ययभाव मे हो तो मानी, साहसी, दरिद्र तथा राजसेवी होता है और ज्येष्ठ पुत्र नही रहता।। धनेश लग्न मे हो तो पुत्रवाला, अपने कुटुम्ब का द्रोही, धनवान् निष्ठुर, कामी तथा औरो के काम मे सहायक होता है ।।२३–३१।।

## अथ तृतीयेशद्वादशभावस्थितफलमाह

तृतीयेशे तृतीयस्थे विक्रमी सुतसयुत.। धनयुक्तो महाहृष्टो भुनक्ति सुखमद्भुतम्॥३२॥ तृतीयेशे सुखे कर्मे पंचमे वा सुखी सदा। अतिक्रूरा भवेद्भार्या धनाढ्यो मतिमान्भवेत्॥३३॥ तृतीयेशो रिपौ यस्य भ्राता शत्रुर्महाधनो। मातुलानां सुखं न स्यान्मातुल्या भोगमिच्छति ॥३४॥ तृतीयेशे व्यये भाग्ये स्त्रीभिर्भाग्योदयो भवेत्। पिता तस्य महाचोरः सुखेऽपि दुःखदर्शकः ॥३५॥ तृतीयेशेऽष्टमे द्यूने राजद्वारे मृतिर्भवेत्। चौरो वा परगामी वा बाल्ये कष्टं दिने दिने ॥३६॥ तृतीयेशे तनौ लाभे स्वभुजार्जितवित्तवान्। मूर्खः कृशो महारोगी साहसी परसेवकः ॥३७॥ गुदाभंजनिकः स्थूलः परभार्याधने रुचिः। स्वल्पारम्भी सुखी न स्यात्तृतीयेशे धने गते ॥३८॥

### तृतीयेश द्वादशभावफल

तृतीयेश तृतीय मे हो तो विक्रमी सन्तान, सुखवाला, धनी और सुखी, सदा प्रसन्न रहनेवाला होता है। तृतीयेश चौथे भाव मे दशवे या पचम मे हो तो सदा सुखी, मतिमान्, धनी किन्तु स्त्री क्रूर स्वभाववाली होती है। तृतीयेश छठे भाव मे हो तो महाधनी पर उसका भ्राता द्रोही तथा मामा न रहे पर मामी से आसक्त रहे। तृतीये नवम तथा व्यय मे हो तो स्त्री से भाग्योदय हो और पिता महाचोर हो, सुख मे भी कलह करे। तृतीयेश सातवे आठवे मे हो तो राजकार्य मे मृत्यु हो, चोर और परगामी तथा सदारोगी रहता है। तृतीयेश लग्न मे या लाभ मे हो तो स्वय कमाई करनेवाला, दुर्बल, मूर्ख, रोगी, साहसी, परसेवी होता है। तृतीयेश धनस्थान मे हो तो गुदगामी, स्थूलशरीर, अन्य स्त्री के धन का लालची, कम काम करनेवाला तथा दुखी होता है ॥३२–३८॥

## अथ चतुर्थेशद्वादशभावस्थितफलमाह

तुर्येशे तुर्यगे मन्त्री भवेत्सर्वधनाधिपः। चतुरः शीलवान् मानी धनाढ्यः स्त्रीप्रियः सुखी ॥३९॥ तुर्येशे पचमे भाग्ये सुखी सर्वजनप्रियः। विष्णुभक्तिरतो मानी स्वभुजार्जितवित्तवान् ॥४०॥ सुखेशे शत्रुगेहस्थे तथा स्याद्व्ययातृकः। क्रोधी चौरोऽभिचारी च दुष्टचित्तो मनस्व्यपि ॥४१॥ सुखेशे सप्तमे लग्ने बहुविद्यासमन्वितः। पित्रार्जितधनत्यागी सभायां मूकवद्भवेत् ॥४२॥ सुखेशे व्ययरंध्रस्थे सुखहीनो भवेन्नरः। पितृसौख्यं भवेदल्पं क्लीबो वा जारजोऽपि वा ॥४३॥ सुखेशे कर्मगेहस्थे राजमान्यो भवेन्नरः। रसायनी महाहृष्टो भुनक्ति सुखमद्भुतम्॥४४॥ सुखेशे सहजे लाभे नित्यरोगी भवेन्नरः। उदारो गुणवान्दाता स्वभुजार्जितवित्तवान् ॥४५॥ सर्वसपद्युतो मानी साहसी कुहकान्वितः। कुटुंबसयुतो भोगी सुखेशे च धने गते ॥४६॥

### चतुर्थेश द्वादशभावफल

चतुर्थेश अपने अश मे होकर चतुर्थभाव मे स्थित हो तो सब प्रकार की धन सम्पत्तिवाला, चतुर, शीलवान्, मानी एव स्त्रीप्रिय, सुखी होता है। चतुर्थेश पचम तथा भाग्य मे हो तो

सबका प्रेमी, सुखी, विष्णुभक्त, मानी और अपने उद्योग से धनी होता है।। सुखेश यदि छठे भाव मे हो तो यात्रारत, क्रोधी, चोर, दुष्ट, अपकारी और मनस्वी होता है।। सुखेश सप्तमभाव मे या लग्न मे हो तो अनेक विद्यायुक्त, पिताकी सम्पत्ति का त्यागी और सभाचातुर्यहीन होता है।। सुखेश ८।१२ मे हो तो जातक सुखरहित, पितृसुखवंचित, नपुसक या जारज होता है।। सुखेश दशम मे हो तो राजमान्य, अद्भुत सुखभोगी, सदासुखी तथा रसायन जाननेवाला होता है।। सुखेश तृतीयभाव मे या लाभ मे हो तो सदा रोगी, उदार, गुणवान् तथा निजोपार्जित धनी होता है।। सुखेश धनभाव मे हो तो सर्वसम्पत्ति युक्त, मानी, साहसी, भोगी, कुटुम्बी, छली एव कपटी होता है ॥३९–४६॥

## अथ सुतेशद्वादशभावस्थितफलमाह

**सुतेशः पचमे यस्य तस्य पुत्रो न जीवति ॥ क्षणिकः क्रूरभाषी च धार्मिको मतिमान् भवेत् ॥४७॥ सुतेशे षष्ठरिःफस्थे पुत्रः शत्रुत्वमाप्नुयात् ॥ मृतापत्यो भ्राह्यपुत्रो धनपुत्रोऽथवा भवेत् ॥४८॥ सुतेशे कामगे मानी सर्वधर्मसमन्वितः ॥ तुगयष्टिस्तनुस्वामी भक्तियुक्तैकतेजसा ॥४९॥ सुतेशे चायुषि धने बहुपुत्री न सशय. ॥ कासश्वासी सुखी न स्यात् क्रोधयुक्तो धनान्वित ॥५०॥ सुतेशे नवमे कर्मे पुत्रो भूपसमोभवेत् । अथवा ग्रथकर्ता च विख्यातः कुलदीपक ॥५१॥ सुतेशे लाभभवने पडितो जनवल्लभ. ॥ ग्रथकर्ता महादक्षो बहुपुत्रधनान्वित' ॥५२॥ सुतेशे लग्नसहजे मायावी पिशुनो महान् ॥ लोष्ट तु दत्तमात्रैव कश्चिद्द्रव्यस्य का कथा ॥५३॥ सुतेशे मातृभवने चिरं मातृसुख भवेत ॥ लक्ष्मीयुक्तः सुबुद्धिश्च सचिवोऽप्यथवा गुरु' ॥५४॥**

सुतेश द्वादशभावफल

पचमेश पचमभाव मे शुभग्रहयुक्त हो तो पुत्रवान्, क्षणिक मिष्टभाषी, धर्मात्मा तथा बुद्धिमान् होता है।। सुतेश ६।१२ मे हो तो अपना पुत्र ही शत्रु होता है और जीता भी नही है। अत दत्तक या धन से खरीदा हुआ पुत्र होता है।। सुतेश सप्तमभाव मे हो तो अभिमानी, धार्मिक, लम्बा कद, गठीला शरीर, भक्त और तेजस्वी होता है।। सुतेश अष्टम भाव तथा धनभाव मे हो तो अनेक सन्तानवाला, श्वासखासी रोग होने से दु खी, क्रोधी और धनी होता है।। सुतेश नवम या दशमभाव मे हो तो उसका पुत्र राजा के समान हो अथवा ग्रन्थकर्ता विख्यात और अपने कुल का नामी होता है।। सुतेश लाभस्थान मे हो तो पण्डित और समाजसेवी, ग्रन्थकर्ता, अत्यन्त चतुर, अनेक पुत्र, धन से युक्त होता है।। सुतेश लग्न या तृतीयभाव मे हो तो मायावी (कपटी) पिशुन (चुगलखोर) जीवन मे किसी को कुछ भी न देनेवाला होता है। सुतेश चौथे भाव मे हो तो माता पिताका सुख पूर्ण हो, लक्ष्मीयुक्त,बुद्धिमान् या तो सचिव (मन्त्री) या गुरु होता है ॥४७–५४॥

## अथ षष्ठेशद्वादशभावस्थितफलमाह

**षष्ठेशे रिपुभावस्थे स्वज्ञातिः शत्रुवद्भवेत् ॥ परज्ञातिर्भवेन्मित्रं भूमौ न चलति ध्रुवम् ॥५५॥ षष्ठेशे सप्तमे लाभे लग्ने वा कीर्तिमान् भवेत् ॥ धनवान् गुणवान् मानी साहसी पुत्रवर्जितः ॥५६॥**

## अथाष्टमेशद्वादशभावस्थितफलमाह

द्यूती चौरोऽन्यथावादी गुरुनिंदासु तत्परः ॥ अष्टमे ह्यष्टमस्थाने भार्या पररता भवेत् ॥६९॥
अष्टमेशे तप स्थाने महापापी च नास्तिकः ॥ सुतहा ह्यथवा वध्या परभार्याधने रुचिः ॥७०॥
अष्टमेशे सुखे कर्मपिशुनो बंधुवर्जितः ॥ मातापित्रोर्भवेन्मृत्युः स्वल्पकालेन भीतियुक् ॥७१॥
अष्टमेशे सुते लाभे तस्य वृद्धिर्न जायते ॥ द्रव्यं न स्थीयते गेहे स्थिरबुद्धिर्भवेज्जनः ॥७२॥
अष्टमेशे व्यये षष्ठे नित्यं रोगी प्रजायते ॥ जलसर्पादिकाद्घातो भवेत्तस्य च शैशवे ॥७३॥
अष्टमेशे तनौ कामे भार्यायुग्मं समादिशेत् ॥ विष्णुद्रोहरतो नित्यं व्रणरोगी प्रजायते ॥७४॥
धनं तस्य भवस्वल्पं गतं वित्तं न लभ्यते ॥ अष्टमेशे धने बाहुबलहीनः प्रजायते ॥७५॥

### अष्टमेशद्वादशभावफल

अष्टमेश अष्टम में हो तो जुवारी, चोर, झूठा, गुरुनिन्दक हो और उसकी स्त्री व्यभिचारिणी होती है॥ अष्टमेश यदि ९ में हो तो पापी, नास्तिक, उसकी स्त्री वन्ध्या हो तथा आपका मन सदा दूसरे के धन और स्त्री में रहता है॥ अष्टमेश ४।१० में हो तो चुगलखोर, बन्धुहीन, माता तथा पिता का सुख कम रहे, और डरपोक होता है॥ अष्टमेश ५।११ में हो तो परिवार में वृद्धि नहीं हो और घर में धन स्थिर नहीं रहे, जातक स्थिरमति हो॥ अष्टमेश ६।१२ में हो तो सदारोगी रहे, बाल्य अवस्था में जल या सर्प से घात हो॥ अष्टमेश लग्न या सप्तम में हो तो दो भार्या हो, सदा ईश्वर द्रोही और व्रणरोगी होता है॥ अष्टमेश धनस्थान में हो तो दरिद्री, साहस तथा बलहीन होता है॥६९–७५॥
(यहां फल कथन में ३।९ भाव का फलादेश का श्लोक अनुपलब्ध है)

## अथ भाग्येशद्वादशभावस्थितफलमाह

धनधान्ययुतो नित्यं गुणसौंदर्यसंयुतः ॥ बहुभ्रातृसुखं युक्तं भाग्येशे नवमे स्थिते ॥७६॥ भाग्येशे दशमे तुर्ये मंत्री सेनापतिर्भवेत् ॥ पुण्यवान्सुयशा वाग्मी साहसी क्रोधवर्जितः ॥७७॥ भाग्येशे पंचमे लाभे भाग्यवान् जनवल्लभः ॥ गुरुभक्तिरतो मानी धीरो धीरगुणैर्युतः ॥७८॥ भाग्येशे तु तुले रिःफे भाग्यहीनो भवेद् ध्रुवम् ॥ मातुलस्य सुखं न स्याज्ज्येष्ठभ्रातृसुखं तथा ॥७९॥ भाग्येशे च मदे लग्ने गुणवान्कीर्तिमान् भवेत् ॥ कदाचिन्न भवेत्सिद्धं यत्कार्यं कर्तुमिच्छति ॥८०॥ भाग्येशे सहजे वित्ते सदा भाग्यानुचिंतकः ॥ धनवान् गुणवान्कामी पंडितो जनवल्लभः ॥८१॥

### भाग्येशद्वादशभावफल

भाग्येश नवमभाव में हो तो धनधान्ययुक्त और गुणी, सुन्दर तथा अनेक भ्राता हों॥ भाग्येश १०।४ में हो तो मन्त्री या सेनापति हो, पुण्यात्मा, सुयशवाला, वाग्मी (अच्छा बोलनेवाला) साहसी और क्रोधरहित हो॥ भाग्येश ५।११ में हो तो भाग्यवान्, बन्धुप्रेमी, गुरुभक्त,धीर, मानी होता है॥ भाग्येश—तुलाराशि में या बारहवें स्थान में हो तो

भाग्यहीन मामा का सुख तथा बड़े भाई के सुख से हीन होता है॥ भाग्येश लग्न या सप्तम मे हो तो गुणवान्, कीर्तवाला, किन्तु कभी कभी इच्छित कार्य सिद्ध नही हो॥ भाग्येश २।३ मे हो तो भविष्य चिन्तक, गुणी, धनी तथा कामी पंडित एव जनप्रिय होता है॥७६–८१॥

## अथ दशमेशद्वादशभावस्थितफलमाह

दशमेशे सुखे कर्मे ज्ञानवान्सुखविक्रमी ॥ गुरुदेवार्चनरतो धर्मात्मा सत्यसंयुतः ॥८२॥ दशमेशे सुते लाभे धनवान्पुत्रवान् भवेत् ॥ सर्वदा हर्षसंयुक्तः सत्यवादी सुखी नरः ॥८३॥ कर्मेशोऽरिव्यये यस्य शत्रुभिः परिपीडितः ॥ चातुर्यगुणसंपन्नः क्वचिच्च न सुखी नरः ॥८४॥ दशमाधिपतौ लग्ने कवितागुणसंयुतः ॥ बाल्ये रोगी सुखी पश्चादर्थवृद्धिर्दिने दिने ॥८५॥ धने मदे च सहजे कर्मेशो यदि संस्थितः ॥ मनस्वी गुणवान्वाग्मी सत्यधर्मसमन्वितः ॥८६॥

### दशमेशद्वादशभावफल

दशमेश ४।१० मे हो तो ज्ञानी सुखी पराक्रमी, देवगुरुभक्त, धर्मात्मा तथा सत्यवादी होता है॥ दशमेश ५।११ मे हो तो धनवान् और पुत्रवान्, सदा प्रसन्नचित्त, सुखी और सत्यवादी होता है॥ दशमेश ६।१२ मे हो तो जातक शत्रुओं से पीड़ित, चतुर तथा कभी–कभी दु:खी रहता है॥ दशमेश लग्न मे हो तो कविता करनेवाला तथा बाल्यावस्था मे रोगी पश्चात् नीरोग और दिनानुदिन धनवृद्धि होती है॥ दशमेश २।७।३ में हो तो मनस्वी, गुणी, वक्ता तथा सत्यवादी होता है ॥८२–८६॥

## अथ लाभेशद्वादशभावस्थितफलमाह

लाभेशे संस्थिते लाभे स वाग्मी जायते ध्रुवम् ॥ पाण्डित्यं कविता चैव वर्द्धते च दिने दिने ॥८७॥ प्राप्तिस्थानाधिपे रिःफे म्लेच्छससर्गकारकः ॥ कामुको बहुकान्तश्च क्षणिको लम्पटः सदा ॥८८॥ लाभेशे संस्थिते लग्ने धनवान्सात्त्विको महान् ॥ समदृष्टिर्महावक्ता कौतुकी च भवेत्सदा ॥८९॥ लाभेशे च धने पुत्रे नानासुखसमन्वितः ॥ पुत्रवान्धार्मिकश्चैव सर्वसिद्धिप्रदायकः ॥९०॥ लाभेशे सहजे वित्ते तीर्थेषु तत्परो महान् ॥ कुशलः सर्वकार्येषु केवलं शूलरोगवान् ॥९१॥ लाभेशे षष्ठभवने नानारोगसमन्वितः ॥ सर्वं सुखं भवेत्तस्य प्रवासी परसेवकः ॥९२॥ लाभेशे सप्तमे रन्ध्रे भार्या तस्य न जीवति ॥ उदारो गुणवान्कर्मी मूर्खो भवति निश्चितम् ॥९३॥ लाभेशे गगने धर्मे राजपूज्यो धनाधिपः ॥ चतुरः सत्यवादी च निजधर्मसमन्वितः ॥९४॥

### लाभेश द्वादशभावफल

लाभेश स्वगृही हो तो वाग्मी, पण्डित और दिनानुदिन उत्तम कविता करनेवाला होता है॥ लाभेश १२ भाव मे हो तो म्लेच्छ ससर्गी, कामी अनेक स्त्रीससर्गी, क्षणिकमति और लम्पट होता है॥ लाभेश लग्न मे हो तो धनवान्, सात्त्विक भाववाला, समदर्शी श्रेष्ठवक्ता तथा कौतुकी होता है॥ लाभेश २।५ मे हो तो नानासुखभोगी, पुत्रवान्, धार्मिक तथा सर्वसिद्धिसम्पन्न होता है॥ लाभेश २।३ मे हो तो तीर्थसेवी, सर्वकार्यकुशल होता है केवल शूल रोग रहता है॥ लाभेश छठे भाव मे हो तो नाना व्याधिग्रस्त, सर्वसुखसम्पन्न तथा परदेशवासी

एवं नौकरी करनेवाला होता है।। लाभेश ७।८ मे हो तो उसकी भार्या नहीं जीवे। उदार गुणी तथा कर्मी हो एवं मूर्ख हो।। लाभेश ९।१० मे हो तो धनी, राजपूज्य, चतुर, सत्यवादी तथा धर्मात्मा होता है ।।८७—९४।।

## अथ व्ययेशद्वादशभावस्थितफलमाह

**व्ययेशेऽरिव्यये पापी मातृमृत्युविचिंतकः ।। क्रोधी सन्तानदुःखी च परजायासु लंपटः।।९५।। व्ययेशे मदने लग्ने जायासौख्यं भवेन्नहि ।। दुर्बलः कफरोगी च धनविद्याविवर्जितः ।।९६।। व्ययेशे द्वितीये रंध्रे विष्णुभक्तिसमन्वितः ।। धार्मिकः प्रियवादी च सम्पूर्ण गुणसंयुतः ।।९७।। भायद्वेषी प्रियद्वेषी गुरुद्वेषी भवेन्नरः ।। व्ययेशे सहजे धर्मे स्वशरीरस्य पोषकः ।।९८।। व्ययेशे दशमे लाभे पुत्रसौख्यं भवेन्नहि ।। मणिमाणिक्यमुक्तादि धत्ते किंचित्समालभेत् ।।९९।। एतत्ते कथितं विप्र भावानां च फलाफलम् ।। बलाबलविवेकेन सर्वेषां फलमादिशेत् ।।१००।।**

### व्ययेश द्वादशभावफल

व्ययेश ६।१२ मे हो तो पापी तथा माता को मारने के सकल्प वाला, क्रोधी, सन्तान से दुःखी, परस्त्री–रत रहता है।। व्ययेश लग्न या सप्तम मे हो तो स्त्री सुखरहित, दुर्बल, कफरोगी, धन और विद्यारहित होता है।। व्ययेश २।८ मे हो तो विष्णुभक्त, धार्मिक, प्रियभाषी, सम्पूर्ण–गुणयुक्त होता है।। व्ययेश ३।९ मे हो तो भायद्वेषी, तथा प्रियद्वेषी, गुरुद्वेषी एव स्वयपोषक होता है।। व्ययेश १०।११ मे हो तो पुत्र सुख नही होता, मणिमाणिक्य आदि का लाभ होता है।। हे मैत्रेय! १२ भावो का ग्रह फलाफल हमने कहा, ग्रहों के बल जानकर इनका फल कहना चाहिए।।

**वक्री चेत्स्वच तुर्थः स्यात्फलं भौमो ददाति च ।। बुधस्तुर्येऽथ देवेज्ये पञ्चमे शशिभार्गवौ ।।१०१।। सप्तमस्य तमध्वंसी पुत्रस्य नवमस्य च ।। वित्तस्य विपुत्यर्के ददाति स्वफलं विधुः ।।१०२।। ग्रहे पूर्णफले प्राप्ते फलं पूर्वं समादिशेत् ।। अर्द्धमर्द्धं पादहीने तस्येव पादमंप्रिणा ।।१०३।। भावानां द्वादशानां च सर्वेषां फलमादिशेत् ।। भावस्थानां ग्रहाणां च फलं ते कथितं मया ।।१०४।।**

**इति श्रीबृहत्पाराशरहोराशास्त्रेपूर्वखण्डे भावस्थग्रहाणां फलकथनं नाम पञ्चदशोऽध्यायः ।।१५।।**

उद्दिष्ट ग्रह मे वक्री मगल यदि चतुर्थभाव मे स्थित हो तो पूर्णफल प्राप्त होता है। इसी प्रकार उद्दिष्ट ग्रह से चतुर्थ बुध हो, पञ्चम गुरु हो।। चन्द्र–शुक्र सप्तम हो, शनि नवम हो, वर्क के सूर्य से चन्द्रमा दूसरे हो तो पूर्वोक्त भावफल होता है।। और ग्रह पूर्णबली हों तो पूर्ण फल होता है।। आधे बल मे आधा और हीनबल मे चौथाई फल होता है।। इस कथित ग्रह फल से १२ भावो का फल कहना चाहिये ।।९५—१०४।।

इति बृ० पा० हो० शा० पू० भावप्रकाशिकाया भावस्थग्रहफलकथननाम पञ्चदशोऽध्याय ।।१५।।

# अथ प्राणिनां पूर्वजन्मशापद्योतकम्
## पार्वत्युवाच

**देवदेव जगन्नाथ शूलपाणे वृषध्वज ॥ केन योगेन मर्त्यानां जायते शिशुनाशनम् ॥१॥ तत्सर्वमत्र योगेन ब्रूहि मे शशिशेखर ॥ शापमोक्षं च कृपया प्राणिनामल्पमेधसाम ॥२॥**

### पूर्वजन्म शापकथन

पार्वतीजी ने कहा, हे शूलपाणि वृषध्वज! भगवन् महादेव! जगत् के स्वामी!! किस योग से मनुष्यों के सन्तान की हानि होती है? आप सिद्धयोगी हैं अतः यह सब कहिये और हे शशि शेखर! उन अज्ञानी पुरुषों के शाप को दूर करने का उपाय भी कहियेगा॥१॥२॥

## शङ्कर उवाच

**साधु पृष्टं त्वया देवि कथयामि सविस्तरात् ॥ शृणुष्वैकमना भूत्वा बलाबलवशादपि ॥३॥ नैव सुनिश्चितं सर्वैराशिचक्रे विशेषतः ॥ मेषादिमीनपर्यन्तं मूर्त्यादिद्वादशक्रमात् ॥४॥ भावं च भावजं ज्ञात्वा फलं ब्रूयाद्विचक्षणः ॥ तनुर्वित्तं बंधुमातृपुत्रशत्रुस्मरोमृतिः ॥५॥ पितृकर्म च लाभं च व्ययाता भावसंज्ञकाः ॥ गुरुर्लग्ने शदारेशपुत्रस्थानाधिपेषु च ॥६॥ सर्वेषुबलहीनेषु वक्तव्या त्वनपत्यता ॥ रव्यारराहुशनयः पुत्रस्था बलसंयुता ॥७॥ कारकाद्यात्क्षीणबलादनपत्यत्वमादिशेत् ॥ पुत्रस्थानगते राहौ कुजेनापि निरीक्षिते ॥ कुजक्षेत्रगते वापि सर्पशापात्सुतक्षयः ॥८॥ पुत्रेशे राहुसंयुक्ते पुत्रस्थे भानुनन्दने ॥ चन्द्रदृष्टे युते वापि सर्पशापात्सुतक्षयः ॥९॥**

शंकरजी ने कहा—हे देवि! तुमने बहुत अच्छा प्रश्न किया, ध्यान देकर सुनो। हम विस्तार से सबका उत्तर कहते हैं॥ ग्रहों के बलाबल से बारह राशियों के भावों का सुनिश्चित फल जाना जाता है। मेष से मीन पर्यन्त बारह राशियों का स्वरूप जानकर भाव और भाव का फल जानकर कहना चाहिये॥ १२ भावों के नाम कहते हैं तनु, वित्त, बन्धु, माता, पुत्र, शत्रु, भार्या, मृत्यु, धर्म, कर्म, लाभ और व्यय ये बारह भाव हैं। बृहस्पति, सप्तेश,पुत्रेश इन सब भावों के और भावेशों के बलहीन होने पर पुत्रहीनता कहनी चाहिये। सूर्य, मंगल, राहु और शनि ये बलवान होकर पंचम भाव में हों, पुत्रकारक हीनबल हो तो पुत्रहीनता कहनी चाहिये। पंचम भाव में राहु हो, मंगल देखता हो अथवा मंगल की राशि हो तो पूर्वजन्म के सर्प के शाप से इस जन्म में पुत्र की मृत्यु होती है॥ पंचमेश राहुयुक्त हो, पंचम भाव में शनि हो। चन्द्रमा युक्त अथवा देखता हो, तो सर्प के शाप से पुत्र नाश होता है॥३—९॥

**कारके राहुसंयुक्ते पुत्रेशे बलवर्जिते ॥ विलग्नेशे भौमयुते सर्पशापात्सुतक्षयः ॥१०॥ कारके भौमसंयुक्ते लग्ने च राहुसंयुते ॥ पुत्रस्थानेश्वरे दुःस्थे सर्पशापात्सुतक्षयः ॥११॥ भौमांशे भौमसंयुक्ते पुत्रेशे सोमनन्दने ॥ राहुमांदियुते लग्ने सर्पशापात्सुतक्षयः ॥१२॥ पुत्रस्थाने कुजक्षेत्रे पुत्रे राहुसमन्विते ॥ सौम्यदृष्टे युते वापि सर्पशापात्सुतक्षयः ॥१३॥ पुत्रस्था**

भानुमंदाराः स्वर्भानुः शशिजोगिराः ॥ निर्बलौ पुत्रलग्नेशौ सर्पशापात्सुतक्षयः ॥१४॥ लग्नेशे राहुसंयुक्ते पुत्रेशे भौमसंयुते ॥ कारके राहुसंदृष्टे सर्पशापात्सुतक्षयः ॥१५॥ तद्दोषपरिहारार्थं नागपूजां समारभेत् ॥१६॥ स्वगृह्योक्तविधानेन प्रतिष्ठां कारयेत्सुधीः ॥ नागमूर्ति सुवर्णेन कृत्वा पूजां समाचरेत् ॥१७॥ गोभूतिलहिरण्यादि दद्याद्वित्तानुसारतः ॥ एवं कृते तु नागेंद्रप्रसादाद्वर्धतेकुलम् ॥१८॥ पुत्रस्थान गते भानौ नीचे मंदांशकस्थिते ॥ पार्श्वयोः क्रूरसम्बन्धे पितृशापात्सुतक्षयः॥१९॥ पुत्रस्थानाधिपे भानौ त्रिकोणे पापसंयुते ॥ क्रूरेन्तरे पापदृष्टे पितृशापात्सुतक्षयः ॥२०॥

पुत्रकारक राहु के साथ हो, पुत्रेश बलहीन हो, लग्नेश मंगलयुक्त हो तो सर्प शाप से सुतक्षय होता है।। पुत्रकारक मंगलयुक्त हो, लग्न में राहु, पुत्रेश तीसरे हो तो सर्प शाप से सुत–क्षय होता है।। मंगल अपने नवमांश में हो, पुत्रेश बुध हो, लग्न में राहु और मान्दी हो तो सर्प शाप से सुत–क्षय होता है।। पुत्रस्थान में मंगल की राशि और राहु हो बुध युक्त या देखता हो, तो सर्प शाप से सुत–क्षय होता है।। पुत्रस्थान में सूर्य मंगल शनि, राहु, बुध और शुक्र हो, पुत्रेश और लग्नेश निर्बल हो, तो सर्प शाप से सुत–क्षय होता है।। लग्नेश के साथ राहु हो, पुत्रेश के साथ मंगल हो, पुत्रकारक को राहु देखता हो तो सर्प शाप से सुत–क्षय होता है।। (इतने योग कहे गये और इनका उपाय कहते हैं) इस दोष के दूर करने के लिये, नागपूजा करनी चाहिये। सुवर्ण की नागमूर्ति बनाकर, विधान से प्रतिष्ठा करे और फिर पूजा करे।। तिल, गौ, सुवर्ण इनका शक्ति के अनुसार दान करे और मूर्ति का भी दान करे, तो ऐसा करने पर नागेन्द्र की कृपा से कुल में वृद्धि होती है।। (यह उपाय किसी महान पर्व में गया आदि तीर्थ पर किया जाता है) अब पितृशाप के योग कहते हैं। पुत्रस्थान में सूर्य हो और नीच का होकर शनि के अंश में हो, १२ वें तथा दूसरे स्थान में पापग्रह हो तो पितृशाप से सुत–क्षय होता है।। पुत्रस्थान का स्वामी सूर्य त्रिकोण स्थानों में पापग्रह से युक्त होकर स्थित हो और सूर्य के दोनों तरफ क्रूर ग्रह हो, पापग्रह की दृष्टि हो तो पितृशाप से सुत–क्षय होता है ॥१०–२०॥

भानुराशिस्थिते जीवे पुत्रेशे भानुसंयुते ॥ पुत्रे लग्ने पापयुते पितृशापात्सुतक्षयः ॥२१॥ लग्नेशे दुर्बले पुत्रे पुत्रेशे भानुसंस्थिते ॥ पुत्रे लग्ने पापयुते पितृशापात्सुतक्षयः ॥२२॥ पितृस्थानाधिपे पुत्रे पुत्रेशे वा तथा स्थिते ॥ लग्ने पुत्रे पापयुते पितृशापात्सुतक्षयः ॥२३॥ पितुः स्थानाधिपो भौमःपुत्रेशेन समन्वितः ॥ लग्ने पुत्रे पितृस्थाने शापात्सततिनाशनम् ॥२४॥ पितृस्थानाधिपे दुःस्थे कारके पापराशिगे ॥ पुत्रे लग्नेश्वरे पापे पितृशापात्सुतक्षयः ॥२५॥ लग्नपंचमभावस्था भानुभौमशनैश्चराः ॥ रन्ध्रे रिष्फे राहुजीवौ पितृशापात्सुतक्षयः ॥२६॥ लग्नाष्टमगते भानौ पुत्रस्थे भानुनंदने ॥ पुत्रेशे राहुसंयुक्ते लग्ने पापे सुतक्षय ॥२७॥ व्ययेशे लग्नभावस्थे रन्ध्रेशे पुत्रराशिगे ॥ पितृस्थानाधिपे रन्ध्रे पितृशापात्सुतक्षयः ॥२८॥ रोगेशे पुत्रभावस्थे पितृस्थानाधिपे तथा॥कारके राहुसंयुक्ते पितृशापात्सुतक्षय॥२९॥तद्दोषपरिहारार्थं गयाश्राद्धं च कारयेत् ॥ ब्राह्मणान् भोजयेदत्र अयुतं वा सहस्रकम् ॥३०॥ कन्यादानं ततः कृत्वा गां च दद्यात्सवत्सकाम् ॥ एवं कृते पितुः शापान्मुच्यते नात्र संशयः ॥३१॥ वर्द्धते च कुलं तस्य पुत्रपौत्रादिभिस्तथा ॥ दृष्टियोगपदैः सर्वं फलं ब्रूयाद्विचक्षणः ॥३२॥

### अब मातृशाप के योग एव उपाय कहते हैं

पुत्रेश चन्द्रमा नीच का हो और पापग्रहो के बीच मे हो अर्थात् चतुर्थ और षष्ठभाव मे पापग्रह हो तो मातृशाप से सुत–क्षय होता है। पुत्रेश तृतीय मे हो, लग्न मे नीच राशि हो, चन्द्र और पापग्रहो का योग हो तो मातृशाप से सुत क्षय होता है। पुत्रेश तृतीय मे, चन्द्रमा पाप नवमांश मे, लग्न मे तथा पुत्रभाव मे पापग्रह हो तो मातृ शाप से सुत–क्षय होता है।। पुत्रेश चन्द्रमा, शनि, राहु, मगल से युक्त होकर नवम या पचम भाव मे स्थित हो, अथवा यही योग पुत्र कारक के साथ हो तो मातृशाप से सुतक्षय होता है। चतुर्थेश मगल, शनि, राहु, युक्त हो, पुत्र भाव मे चन्द्रमा एव सूर्य हो या लग्न मे हो तो मातृ शाप से सुत–क्षय होता है।। लग्नेश एव पुत्रेश शत्रुस्थान मे हो, चतुर्थेश अष्टमभाव मे हो अष्टम और दशम के स्वामी लग्न मे हो तो मातृ शाप से सुत क्षय होता है।। षष्ठेश और अष्टमेश लग्न मे हो या व्यय मे हो चतुर्थेश पचम मे हो या व्यय मे हो, पचम भाव मे चन्द्रमा और बृहस्पति पापयुक्त हो तो मातृ–शाप से सुत–क्षय होता है।। लग्न की दोनो पार्श्व राशि मे पापग्रह हो क्षीण चन्द्रमा सप्तम भाव मे हो, चौथे भाव मे और पाचवे भाव मे राहु शनि हो तो मातृशाप से सुत–क्षय होता है।। अष्टमेश पचम मे हो पचमेश अष्टम मे हो चन्द्रमा और चतुर्थेश तृतीय भाव मे हो, तो मातृशाप से सुत–क्षय होता है।। चन्द्रमा की राशि मे लग्न हो, मगल राहु युक्त हो चन्द्रमा और शनि पचम भाव मे हो तो मातृशाप से सुत–क्षय होता है।। लग्न पचम अष्टम और द्वादश भाव मे क्रमश मगल, राहु शुक्र एव शनि हो चतुर्थ एव लग्नेश तृतीय भाव मे हो तो मातृ शाप से सुत–क्षय होता है।। अष्टम भाव मे बृहस्पति हो, मगल राहु से युक्त हो, पचम भाव मे शनि चन्द्रमा हो तो मातृ शाप से सुत–क्षय होता है।। पण्डित को विचारकर इस प्रकार उपर्युक्त योग से फल कहना चाहिये। शुभयोग से सुख और मिश्र योग से मध्यम फल होता है (उपाय) सेतुबन्ध रामेश्वर मे स्नान करे एक लाख गायत्री मन्त्र का जाप करे जिस ग्रह का दुर्योग हो उस ग्रह का दान करे चादी के पात्र मे दूध भर कर दान दे। यथाशक्ति ब्राह्मण भोजन कराये, पीपल की प्रदक्षिणा करे भक्तियुक्त होकर ये कर्म करे। ऐसा करने से शकर कहते है हे देवी ! शाप से मुक्ति मिलती है एव श्रेष्ठ पुत्र की प्राप्ति होती है और उस पुत्र से परिवार चलता ।।३२ ४९।।

अत पर प्रवक्ष्यामि भ्रात्रादी शापकारणम् ।। पापयोगेन भावेन कारकेण बलाबले ।।५०।। भ्रातृस्थानाधिपे पुत्रे कुजराहुसमन्विते ।। पुत्रलग्नेश्वरौ रन्ध्रे भ्रातृशापात्सुतक्षय ।।५१।। लग्ने सुते कुजे मदे भ्रातृपे भाग्यराशिगे ।। कारके नाशराशिस्थे भ्रातृशापात्सुतक्षय ।।५२।। भ्रातृस्थाने गुरौ नीचे मद पचमगो यदि ।। नाशस्थौ न तु मन्दारौ भ्रातृशापात्सुतक्षय ।।५३।। मूर्तिस्थानाधिपे रि फे भौम पचमगो यदि ।। पुत्रेशे रन्ध्रपापस्थे भ्रातृशापात्सुतक्षय ।।५४।। पाप मध्यगते लग्ने सुतभे पापमध्यगे ।। नाथौ न कारकौ दुःस्थे भ्रातृशापात्सुतक्षय ।।५५।। कर्मेशे भ्रातृ भावस्थे पापयुक्ते सुते शुभे ।। पुत्रे च कुजसयुक्ते भ्रातृशापात्सुतक्षय ।।५६।। पुत्रस्थाने बुधक्षेत्रे शनिराहुसमन्विते ।। रि फे विदारौ शापत्वाद् भ्रातृशापात्सुतक्षय ।।५७।। लग्नेशे भातृराशिस्थे भ्रातृस्थानाधिपे सुते ।। लग्ने भ्रातृसुते पापे भ्रातृशापात्सुतक्षय ।।५८।। भ्रात्रीशे नाशराशिस्थे पुत्रस्थे कारके तथा ।। राहुमादियुते दृष्टे भ्रातृशापात्सुतक्षय ।।५९।। नाशस्थानाधिपे पुत्रे

भ्रातृनाथेन संयुते ॥ रंध्रे आरार्किसंयुक्ते भ्रातृशापात्सुतक्षयः ॥६०॥ भ्रातृशापविमोक्षार्थं श्रवण विष्णुकीर्तनम् ॥ चांद्रायणं चरेत्पश्चात्कावेर्यां विष्णुसंन्निधौ ॥६१॥ अश्वत्थस्थापनं कार्यं दश धेनूः प्रदापयेत् ॥ प्राजापत्यं चरेत्तत्र भूमिं दद्यात्फलान्विताम् ॥६२॥ एवं यः कुरुते भक्त्या पुत्रवृद्धिः प्रजायते ॥६३॥ पुत्रस्थाने बुधे जीवे कुजराहुसमन्विते ॥ लग्ने मंदसमायोगे मातुलात्सुतनाशनम् ॥६४॥ लग्नपुत्रेश्वरौ पुत्रे बुधभौमसमन्विते ॥ मंदे मातुलशापत्वात्पुत्रसंततिनाशनम् ॥६५॥

### भ्रातृशाप के योग तथा उपाय

अब यहाँ से भ्रातृशाप का कारण कहते है॥ भाव मे पापग्रह के योग से तथा पुत्र एवं भ्रातृकारक के बलाबल से शापयोग कहते हैं। तृतीयेश पचमभाव मे मगल, राहुयुक्त हो, पुत्रेश तथा लग्नेश अष्टमभाव मे हो तो भ्रातृशाप से सुतक्षय होता है॥ लग्न मे मगल, पचम मे शनि, तृतीयेश नवमभाव मे तथा पुत्रकारक अष्टमभावमे स्थित हो तो भ्रातृशाप से सुतक्षय है॥ तृतीयभाव मे नीचराशि का गुरु हो, शनि पचमभाव मे हो तथा अष्टमभाव मे भौम, शनि न हो तो भ्रातृशाप से सुतक्षय होता है॥ लग्नेश १२मे मगल पचमभाव मे हो, पुत्रेश अष्टमभाव मे पापग्रह युक्त हो तो भ्रातृशाप से सुतक्षय होता है॥ लग्न तथा पचमभाव दोनो पापग्रह के मध्य मे हो और इन भावो के स्वामी तृतीयाभाव मे हों एव कारकग्रह भी तृतीयभाव मे हो तो भ्रातृशाप से सुतक्षय होता है॥ दशमेश तृतीयभाव मे हो, पचमभाव मे पापग्रह युक्त शुभग्रह हो,पचमभाव मे मगल हो तो भ्रातृशाप से सुतक्षय होता है॥ पचमभाव मे बुध राशि शनि राहुयुक्त हो, १२वे भाव मे मगल और बुध हो तो भ्रातृशाप से सुतक्षय होता है॥ लग्नेश तृतीय भाव मे हो और तृतीयेश पचमभाव मे हो लग्न, तृतीय, पचम मे पापग्रह हो तो भ्रातृशाप से सुतक्षय होता है॥ तृतीयेश अष्टम मे हो और पुत्रकारक पुत्रभाव मे राहु और मान्दी से युक्त या दृष्ट हो तो भ्रातृशाप से सुतक्षय होता है॥ अष्टमेश पचम मे हो और तृतीयेशयुत हो तथा अष्टमभाव मे मगल शनि हो तो भ्रातृशाप से सुतक्षय होता है॥ (उपाय) भ्रातृशाप को दूर करने के लिए 'विष्णु पुराण' का श्रवण तथा विष्णुनाम जप कीर्तन करे, बाद मे चान्द्रायण व्रत करे, पश्चात् कावेरी नदी के तट या विष्णु मदिर मे पीपल का वृक्ष लगावे तथा दश गोदान करे, प्राजापत्यव्रत करे, फलभूमि प्रदान करे॥ इस प्रकार भक्ति से जो करता है उसके पुत्र की वृद्धि होती है॥५०–६३॥

### मामा के शाप का वर्णन और उपाय

पचमभाव मे बुध गुरु मगल राहु हो, लग्न मे शनि हो तो मामा के शाप से सुतक्षय होता है॥ लग्नेश और पचमेश पुत्र भाव मे हो, बुध मगल शनि के साथ हो तो मामा के शाप से सुतक्षय होता है॥६४-६५॥

लुप्ते पुत्राधिपे लग्ने सप्तमे भानुनन्दने ॥ लग्नेशे बुधसंयुक्ते तस्य संततिनाशनम् ॥६६॥ ज्ञातिस्थानाधिपे लग्ने व्ययेशेन समन्विते ॥ शशिसौम्यकुजे पुत्रे तस्य संततिनाशनम् ॥६७॥ पुत्रलग्नाधिपौ युक्तावन्योन्यं साय योसितौ ॥ पुत्रे परस्परस्थो वा पुत्रयोगा इमे स्मृताः ॥६८॥ तद्दोषपरिहारार्थं विष्णुस्थापनमुच्यते ॥ वापीकूपतडागादिबंधनसेतुदर्शनम् ॥६९॥ पुत्रवृद्धिर्भ-

वेत्तस्य सपत्वृद्धि प्रजायते ॥ इद योगग्रहेणैव फल ब्रूयाद्विचक्षण ॥७०॥ गुरुक्षेत्रे यदा राहु पुत्रे जीवारभानुजा ॥ धर्मस्थानाधिपे नाशे ब्रह्मशापात्सुतक्षय ॥७१॥ विद्यागर्वेण यो मर्त्यो ब्राह्मणानवमन्यते ॥ तद्दोषाद् ब्रह्मशापत्वात्सततेस्तस्य नाशनम् ॥७२॥ धर्मेशे पुत्रभावस्थे पुत्रेशे नाशराशिगे ॥ जीवाररराहुमृत्युस्थे ब्रह्मशापात्सुतक्षय. ॥७३॥ धर्माधिपे नीचगते व्ययेशे पुत्रराशिगे ॥ राहुयुक्तेक्षिते वापि ब्रह्मशापात्सुतक्षय ॥७४॥ जीवे नीचगते राहुर्लग्ने वा पुत्रराशिगे ॥ पुत्रस्थानाधिपे दुःखे ब्रह्मशापात्सुतक्षय ॥७५॥ पुत्रस्थानाधिपे जीवे रन्ध्रे पापसमन्विते ॥ पुत्रेशार्कचद्रौ वा ब्रह्मशापात्सुतक्षय ॥७६॥ मदांशे मदसयुक्ते जीवे भौमसमन्विते ॥ पुत्रेशे व्ययराशिस्थे ब्रह्मशापात्सुतक्षय ॥७७॥ लग्ने गुरुयुते मदे भाग्ये राहुसमन्विते ॥ व्यये गुरुसमायोगे ब्रह्मशापात्सुतक्षय ॥७८॥ तस्य दोषस्य शात्यर्थं कुर्याच्चान्द्रायण नर ॥ ब्रह्मकूर्चत्रय कृत्वा धेनु दद्यात्सदक्षिणाम् ॥७९॥ पचरत्नानि देयानि सुवर्णेन समन्वितम् ॥ अन्नदान तत कुर्यादयुत वा सहस्रकम् ॥८०॥ एव कृते तु सत्पुत्र लभते नात्र सशय ॥ मुक्तशापो विशुद्धात्मा स पुमान्सुखमेधते ॥८१॥ दारेशे पुत्रभावस्ते वारेशस्याशपे शनौ ॥ पुत्रेशे नाशराशिस्थे पत्नीशापात्सुतक्षय ॥८२॥ कलत्रेशे नाशसस्थे रिफेशे पुत्रराशिगे ॥ कारके पापसयुक्ते पत्नीशापात्सुतक्षय ॥८३॥ पुत्रस्थानगते शुक्रे कामपे रन्ध्रमाश्रिते ॥ कारके पापसयुक्ते पत्नीशापात्सुतक्षय ॥८४॥ कुटुबे पापसबद्धे कामेशे नाशराशिगे ॥ पुत्रे पापग्रहैर्युक्ते पत्नीशापात्सुतक्षय ॥८५॥ भाग्यस्थानगते शुक्रे दारेशे नाशराशिगे ॥ लग्ने पापे सुते पापे पत्नीशापात्सुतक्षय ॥८६॥ भाग्यस्थानाधिपे शुक्रे पुत्रेशे शत्रुराशिगे ॥ गुरुलग्नेशदारेशा दुःस्था सततिनाशनम् ॥८७॥ पुत्रस्थाने भृगुक्षेत्रे राहुचद्रसमन्विते॥ व्यये लग्ने धने पापे स्त्रीशापात्सुतनाशनम् ॥८८॥ सप्तमे मदशुक्रौ च रन्ध्रेशे पुत्रभेरवौ ॥ लग्ने राहुसमायोगे पत्नीशापात्सुतक्षय ॥८९॥

पुत्रेश लग्न मे अस्त होकर स्थित हो सप्तमभाव मे शनि हो लग्नेश के साथ बुध हो तो सन्तति नष्ट होती है। पुत्र भावेश लग्न मे हो व्ययेश के साथ च० म०, बु० पचम मे हो तो सन्तति नष्ट होती है । पुत्रेश और लग्नेश परस्पर दृष्ट या परस्पर स्थान सम्बन्ध हो तो पुत्र सुख होता है । पूर्वोक्त दोष दूर करने के लिए कुआ, बावडी, तालाब बनाना सेतुबन्ध रोमेश्वर का दर्शन करना॥ इनके करने से पुत्रसुख होता है तथा सम्पत्ति की वृद्धि होती है॥ इन ग्रहयोगो से पण्डित को फल कहना चाहिये॥ गुरु के घर मे राहु हो पचम मे सू० म वृ० हो नवमेश अष्टम मे हो तो ब्रह्मशाप से सुतक्षय होता है॥ विद्वत्ता के घमण्ड से जो मनुष्य ब्राह्मण का अपमान करता है उस पाप से ब्रह्मशाप होता है और उससे सन्तति नाश होती है॥ नवमेश पुत्रभाव मे हो पुत्रेश अष्टम मे हो वृ० म० रा० अष्टम मे हो तो ब्रह्म शाप से सुतक्षय होता है॥ नवमेश नीच का हो व्ययेश पुत्रभाव मे हो, राहुदृष्ट हो तो ब्रह्मशाप से सुतक्षय होता है॥ गुरु नीचराशि का हो, राहु लग्न मे हो या पुत्रभाव मे हो, पुत्रेश छठे भाव मे हो तो ब्रह्म शाप से सुतक्षय होता है॥ गुरु सुतेश होकर तथा पापग्रहयुक्त अष्टमभाव मे हो तथा पुत्रेश सूर्य या चन्द्रमा हो तो ब्रह्मशाप से सुतक्षय होता है॥ शनि अपने नवाश मे हो, गुरु मगल के साथ हो, पुत्रेश व्ययभाव मे हो तो ब्रह्मशाप से सुतक्षय होता है॥ लग्न मे गुरु, शनि भाग्यस्थान मे राहुयुक्त हो या गुरु व्ययभाव मे हो तो ब्रह्मशाप से सुतक्षय होता है॥ इस दोष की शान्ति के लिए चान्द्रायण व्रत करे, बाद ब्रह्मकूर्च व्रत ३ करे

पश्चात् गोदान, सुवर्ण, पञ्चरत्नदान, अन्नदान करे, ब्राह्मण भोजन कराये।। ऐसा करने से सत्पुत्र अवश्य होता है इसमें संशय नहीं। उसका शाप दूर होकर आत्मा शुद्ध हो जाती है और सुख की वृद्धि होती है।। सप्तमेश पुत्रभाव में हो सप्तमभाव के नवांश का स्वामी शनि हो पुत्रेश अष्टमभाव में हो तो पत्नी के शाप से सुतक्षय होता है।। सप्तमेश अष्टम में हो, व्ययेश पुत्रभाव में हो, पुत्रकारक पापयुक्त हो तो पत्नीशाप से सुतक्षय होता है।। शुक्र पंचम में हो, सप्तमेश अष्टम में हो, पुत्रकारक पापग्रहयुक्त हो तो पत्नीशाप से सुतक्षय होता है।। तृतीयभाव का पापग्रह से सम्बन्ध हो, सप्तमेश अष्टम में हो, पुत्रभाव में पापग्रह हो तो पत्नीशाप से सुतक्षय होता है।। शुक्र भाग्यस्थान में हो, सप्तमेश अष्टम में हो, लग्न में तथा पंचम में पापग्रह हों तो पत्नी शाप से सुतक्षय होता है।। भाग्येश शुक्र हो पुत्रेश छठे भाव में हो, गुरु, लग्नेश और सप्तमेश तृतीयभाव में हो तो पत्नीशाप से सुतक्षय होता है।। पुत्रभाव में शुक्रराशि हो, चन्द्रमा और राहुयुक्त हो लग्न व्यय, धन भाव में पापग्रह हो तो स्त्री के शाप से सुतक्षय होता है।। सप्तमभाव में शनि शुक्र हो अष्टमभाव में पुत्रेश की राशि हो, राहुसहित सूर्य लग्न म हो तो पत्नी शाप से सुतक्षय होता है ।।६६-८९।।

धने कुजे व्यये जीवे पुत्रस्थे भृगुनन्दने ।। राहुयुक्तेक्षिते वापि पत्नीशापात्सुतक्षय ।।९०।। नाशस्थौ वित्तदारेशौ पुत्रे लग्ने कुजे शनौ ।। कारके पापसंयुक्ते पत्नीशापात्सुतक्षयः ।।९१।। लग्नपंचमभाग्यस्था राहुमन्दकुजा क्रमात् ।। रन्ध्रस्थौ पुत्रदारेशौ पत्नीशापात्सुतक्षय ।।९२।। तस्य दोषस्य शान्त्यर्थं कन्यादान समाचरेत् ।। लक्ष्मीनारायण देव सर्वाभरणभूषितम् ।।९३।। मूर्तिदान च कर्तव्य दशधेनू प्रदापयेत् ।। शय्या च भूषण चैव दपत्योर्दापयेत्सुधी ।।९४।। पुत्र प्रसूयते तस्य भाग्यवृद्धिश्च जायते ।। मन्त्रशापमिद मर्त्य पिशाच बाध्यते सदा ।।९५।। कर्मलोप पितृभ्यश्च तच्छापाद्वंशनाशनम् ।। पुत्रस्थितौ मदसूर्यौ क्षीणचद्रस्तु सप्तमे ।। लग्ने व्यये राहुजीवौ प्रेतशापात्सुतक्षय ।।९६।। पुत्रस्थानाधिपे मदे नाशस्थे लग्नगे कुजे ।। कारके नाशराशिस्थेप्रेतशापात्सुतक्षय ।।९७।। लग्ने पापे व्यये भानौ सुते चारार्किसोमजा । पुत्रेशे रन्ध्रभावस्ते प्रेतशापात्सुतक्षय ।।९८।। लग्ने पापा व्यये भानौ सुते चारार्किसोमजा ।। पुत्रेशे रन्ध्रभावस्थे प्रेतशापात्सुतक्षय ।।९९।। लग्ने राहुसमायोगे पुत्रस्थे भानुनदने ।। कारके नाशराशिस्थे प्रेतशापात्सुतक्षय ।।१००।।

धनभाव में मगल, व्ययभाव में गुरु, पंचमभाव में शुक्र हो, राहु से युक्त या दृष्ट हो तो पत्नीशाप से सुतक्षय होता है।। द्वितीयेश तथा सप्तमेश अष्टम में हों पुत्रभाव में मगल, लग्न में शनि हो और पुत्रकारक पापग्रहयुक्त हो तो पत्नी शाप से सुतक्षय होता है।। लग्न में राहु पंचम में शनि, नवम में मगल हो, पुत्रेश तथा सप्तमेश अष्टमभाव में हो तो पत्नीशाप से सुतक्षय होता है इस दोष की शान्ति के लिए 'कन्यादान' करे लक्ष्मीनारायण की मूर्ति आभरण (गहनों से) युक्त करके दान करे तथा दस गोदान करे। शय्या और भूषण दान करे। यह दान दम्पत्ति को दे तो पुत्र प्राप्त होता है भाग्यवृद्धि होती है। यह शाप पिशाचरूप है और दुःखदायी है इसमें कर्मलोप होकर पितरों के शाप से वंश का नाश होता है।। पंचमभाव में शनि और सूर्य हो, क्षीण चन्द्रमा सप्तम में हो लग्न में राहु तथा व्यय म गुरु हो तो प्रेतशाप से

सुतक्षय होता है।। शनि, पुत्रेश, ये अष्टम मे, लग्न मे मगल हो, पुत्रकारक अष्टमभाव मे हो तो प्रेतशाप से सुतक्षय होता है।। लग्न मे पापग्रह तथा व्यय मे सूर्य हो सुतभाव मे मगल, शनि और बुध हो तथा पुत्रेश अष्टमभाव मे हो तो प्रेतशाप से सुतक्षय होता है।। लग्न मे पापग्रह तथा व्ययभाव मे सूर्य हो, पचमभाव मे मगल, शनि, बुध हो तथा पुत्रेश अष्टमभाव मे हो तो प्रेतशाप से सुतक्षय होता है।। लग्न मे राहु पुत्रभाव मे शनि हो पुत्रकारक अष्टमभाव मे हो तो प्रेतशाप से सुतक्षय होता है।।(९८-९९ इन दोनो श्लोकोमे एकरूपता है)।।९०-१००।।

लग्ने राहौ च शुक्रेज्ये चन्द्रे मदयुते तथा ॥ लग्नेशे मदराशिस्थे प्रेतशापात्सुतक्षय ॥१०१॥ लग्ने राहुसमायोगे पुत्रस्थे भानुनदने ॥ कुजदृष्टे युते वापि प्रेतशापात्सुतक्षय ॥१०२॥ कारके नीचराशिस्थे पुत्रस्थानाधिपे स्थिते ॥ नीचदृष्टे नीचयुते प्रेतशापात्सुतक्षय ॥१०३॥ लग्ने मदे सुते राहौ रध्रे भानुसमन्विते ॥ व्यये भौमसमायोगे प्रेतशापात्सुतक्षय ॥१०४॥ कामस्थानाधिपे दुस्थे पुत्रे चन्द्रसमन्विते ॥ मदमादियुते लग्ने प्रेतशापात्सुतक्षय ॥१०५॥ बाधस्थानाधिपे पुत्रे शनिशुक्रसमन्विते ॥ कारके नाशराशिस्थे प्रेतशापात्सुतक्षय ॥१०६॥ तद्दोषस्य प्रशान्त्यर्थं विष्णुश्राद्ध च कारयेत् ॥ रुद्रजाप प्रकुर्वीत ब्रह्ममूर्ति प्रदापयेत् ॥१०७॥ धेनु रजतपात्र च नील चैव प्रदापयेत् ॥ एतत्कर्म कृते तत्र शापमोक्ष प्रजायते ॥१०८॥ पुत्रप्राप्तिर्भवेत्तस्य विप्रेभ्यो दक्षिणा दिशेत् ॥ पुत्रे राहुरविसौम्या कारके शुभसयुते ॥ शुभेन वीक्षिते वापि बहुपुत्र समादिशेत् ॥१०९॥ पुत्रेशे शुभराशिस्थे शुभदृष्टिसमन्विते ॥ कारके केन्द्रभावस्थे बहुपुत्र समादिशेत् ॥११०॥ लग्नेशे पुत्रराशिस्थे पुत्रेशे लग्नमाश्रिते ॥ केन्द्रत्रिकोणगे जीवे बहुपुत्र समादिशेत् ॥१११॥ पुत्रस्थानगते राहौ मदाशकविवर्जिते ॥ बहुपुत्र नर विद्याच्छुभग्रहनिरीक्षिते ॥११२॥ पुत्रस्थानाधिपे स्वोच्चे लग्नेशे शुभसयुते ॥ कारके शुभसयुक्ते बहुपुत्र समादिशेत् ॥११३॥ पुत्रस्थाने तदीशे वा गुरौ वा शुभवीक्षिते ॥ शुभेन सहिते वापि बहुपुत्र समादिशेत् ॥११४॥ परिपूर्णबले जीवे लग्नेशे पुत्रराशिगे ॥ पुत्रेशे बलसयुक्ते बहुपुत्र समादिशेत् ॥११५॥ पुत्रस्थानगते जीवे परिपूर्णबलान्विते ॥ लग्नेशे बलसयुक्ते पुत्रयोगा इमे स्मृता ॥११६॥ वर्गोत्तमाशगे जीवे लग्नेशस्याशपे शुभे ॥ पुत्रेशेन युते दृष्टे पुत्रयोगा इमे स्मृता ॥११७॥ वित्तेशे पुत्रभावस्थे परिपूर्णबलान्विते ॥ वैशेषिकाशके जीवे पुत्रयोगा इमे स्मृता ॥११८॥ लग्नात्पुत्राधिपे स्वोच्चे अन्योन्यत्वादिवीक्षिते ॥ परस्परस्थानगते पुत्रयोगा इमे स्मृता ॥११९॥ पुत्रस्थानाधिपस्यांशराशीशे शुभसयुते ॥ शुभेन वीक्षिते वापि पुत्रयोगा इमे स्मृता ॥१२०॥ लग्नपुत्राधिपौ केन्द्रे शुभग्रहसमन्विते ॥ कुटुबेशे बलाढ्ये तु पुत्रयोगा इमे स्मृता ॥१२१॥ लग्नेशे दारभावस्थे दारेशे लग्नमाश्रिते ॥ द्वितीयेशे विलग्नस्थे पुत्रयोगा इमे स्मृता॥ ॥१२२॥ दारेशे ग्रहसयुक्ते नवाशभवनाधिपे ॥ पुत्रवित्तविलग्नेशे पुत्रयोगा इमे स्मृता ॥१२३॥ इति बहुपुत्रयोगा ॥ पुत्रवित्तकलत्रेशा सयुक्ता नवभागपा पापाशका पापयुता अनपत्यत्वमादिशेत् ॥१२४॥ गुरुर्लग्नेशदारेशपुत्रस्थानाधिपेषु वा ॥ सर्वेषु बलहीनेषु वक्तव्या त्वनपत्यता ॥१२५॥ व्ययेशसयुताशेशे मृत्युराशौ स्थिते यदि ॥ पुत्रेशे क्रूरषष्ठ्यशे अनपत्यत्वमादिशेत् ॥१२६॥ लग्नपुत्रेश्वरौ दुस्थे कारके नीचराशिगे ॥ अनपत्यग्रहे पुत्रे अनपत्यत्वमादिशेत् ॥१२७॥ क्रूरषष्ट्यशगे जीवे पुत्रस्थे नाशराशिके ॥ पुत्रेशे नाशराशिस्थे अनपत्यत्वमादिशेत् ॥१२८॥ लग्नाधिपे कुजे स्वोच्चे रध्रे

मंदंयुते रवौ ॥ शुभदृष्टि समायोगे चिरात्पुत्रमुपैति सः ॥१२९॥ लग्ने मंदे गुरौ रंध्रे व्यये भौमसमन्विते ॥ शुभदृष्टे स्वतुंगे वा चिरात्पुत्रमुपैति सः ॥ १३०॥ पुत्रस्था मदजीवज्ञा लग्ने पुत्राधिपे शुभे ॥ पुत्रेशे शुभराशिस्थे चिरात्पुत्रमुपैति सः ॥१३१॥ सुते गह्वर्कशुक्रेज्या शुभर्क्षे शुभवीक्षिते ॥ पुत्रेशे शुभराशिस्थे चिरात्पुत्रमुपैति स ॥१३२॥ लग्ने सौम्ये धने पापे तृतीये पापखेचरे ॥ पुत्रेशे शुभराशिस्थे चिरात्पुत्रमुपैति सः ॥१३३॥ इति पुत्रयोगाः ॥ पुत्रस्थाने कुजे मदे बुधक्षेत्रे विलग्नपे ॥ बुधदृष्टे युते वापि तदा दत्ताः सुतादयः ॥१३४॥

लग्न मे राहु, शुक्र, गुरु, चन्द्र, शनि हो, लग्नेश शनि के भाव मे हो तो प्रेतशाप से सुतक्षय होता है॥ लग्न मे राहु हो, पुत्रस्थान मे शनि हो, मगल से दृष्ट या युक्त हो तो प्रेतशाप से सुतक्षय होता है॥ पुत्रकारक नीचराशि मे हो तथा पुत्रेश भी स्थित हो, नीचग्रह से दृष्ट या युक्त हो तो प्रेतशाप से सुतक्षय होता है॥ लग्न मे शनि, पचम मे राहु तथा अष्टम मे सूर्य हो तथा व्ययभाव मे मगल हो तो प्रेतशाप से सुतक्षय होता है॥ सप्तमेश तृतीयभाव मे हो, पुत्रभाव मे चन्द्रमा हो, लग्न मे शनि और मान्दी हो तो प्रेतशाप से सुतक्षय होता है॥ बाध (६) स्थान का स्वामी पुत्रस्थान मे हो और शुक्र शनि युक्त हो पुत्रकारक अष्टम भाव मे हो तो प्रेतशाप से सुतक्षय होता है॥ इस दोष की शान्ति के लिए 'विष्णुश्राद्ध' करे, रुद्रस्नान करे, ब्रह्मा की मूर्ति का दान करे॥ गौ तथा चान्दी का पात्र और नील वृषभ (बैल) का दान करे। यह उपाय करने से शाप की शान्ति होती है॥ पुत्र की प्राप्ति होती है, पुत्र प्राप्त होने पर ब्राह्मणो को दक्षिणा दे। पुत्र स्थान मे राहु, सूर्य, बुध हो, पुत्र कारक शुभराशि मे हो, शुभग्रहो की दृष्टि हो तो बहुत पुत्र होते है॥ पुत्रेश शुभराशि मे हो, शुभदृष्टि युक्त हो, पुत्रकारक केन्द्रभाव मे हो तो बहुत पुत्र होते है॥ लग्नेश पुत्रभाव मे हो, पुत्रेश लग्न मे हो, गुरु केन्द्र त्रिकोण मे हो तो बहुत पुत्र होते है॥ पुत्रस्थान मे राहु हो परन्तु शनि के नवाश मे नही हो तो बहुत पुत्र होते हैं॥ पुत्रेश उच्च का हो, लग्नेश शुभयुक्त हो, पुत्रकारक शुभग्रहयुक्त हो तो बहुत पुत्र होते है॥ पुत्रभाव या भावेश अथवा गुरु शुभग्रह दृष्ट या युक्त हो तो बहुत पुत्र होते है॥ बृहस्पति पूर्ण बलवान हो, लग्नेश पुत्रभाव मे हो, पुत्रेश भी बलयुक्त हो तो बहुत पुत्र होते है॥ पुत्रस्थान मे गुरु हो, पूर्णबलवान् हो तथा लग्नेश भी बलवान् हो तो पुत्रप्राप्ति का योग है॥ बृहस्पति वर्गोत्तमाश मे हो, लग्नेश के नवाश का स्वामी शुभग्रह हो तथा पुत्रेश मे युक्त या दृष्ट हो तो पुत्रसुख होने के योग है॥ धनेश पुत्रभाव मे हो और पूर्णबली हो, गुरु अपने विशेष अश मे हो, ऐसे योग पुत्रप्रद होते है॥ लग्न से पचमेश उच्चराशि मे हो, लग्नेश पुत्रेश परस्पर दृष्टियोग या स्थान योगकर्ता हो तो पुत्रयोग होता है॥ पुत्रेश की नवाभाश राशि का स्वामी शुभग्रह हो और शुभयुक्त या दृष्ट हो तो पुत्रयोग होता है॥ लग्नेश पुत्रेश केन्द्र मे शुभग्रहयुक्त हो, तृतीयेश बलवान् हो तो पुत्रयोग है॥ लग्नेश सप्तमेश परस्पर एक दूसरे के स्थान मे हो और द्वितीयेश लग्न मे हो तो पुत्रयोग होता है॥ सप्तमेश ग्रहयुक्त हो, लग्न, द्वितीय, पचम के स्वामी नवाश के स्वामी हो तो पुत्रयोग होता है॥ (ये 'बहुपुत्र' योग कहे गये। अब 'पुत्रहीन' योग कहते है।) २।५।७ भावो के स्वामी अपने नवाश मे हो, और पाप नवभाश पापग्रह युक्त हो तो 'पुत्रहीन' योग कहना चाहिये॥ बृहस्पति, लग्नेश, पचमेश, सप्तमेश ये सब ग्रह वर्ग आदि बलहीन हो तो 'पुत्रहीन' योग होता है॥ नवाश पति स्थयेन

युक्त होकर अष्टमभाव मे हो, पुत्रेश पापग्रह के षष्ठयश मे हो तो 'पुत्रहीन' योग होता है।। लग्नेश तथा पुत्रेश तृतीय भाव मे हो, पुत्रकारक नीचराशि मे हो, पुत्रस्थान मे पुत्रनाशक पापग्रह हो तो अनपत्य (पुत्रहीन) योग होता है।। बृहस्पति पापग्रह के षष्ठयश मे हो, अष्टमेश पुत्रभाव मे हो, पुत्रेश अष्टमभाव मे हो तो अनपत्य योग होता है।।
यहा से देरी से पुत्र होने के योग कहते हैं ।
(१) लग्नेश मगल उच्चराशि का हो अष्टमभाव मे शनियुक्त सूर्य हो, शुभदृष्टि हो तो बहुत देर से पुत्र होता है।। लग्न मे शनि, गुरु अष्टम मे, व्यय मे मगल हो शुभदृष्ट या उच्चराशि मे हो तो देरी से पुत्र होता है।। पुत्रभाव मे शनि, गुरु बुध हो, पुत्रेश शुभग्रह हो और लग्न मे अथवा शुभभाव मे हो तो देर से पुत्र होता है।। पुत्रस्थान मे राहु सूर्य शुक्र, गुरु हो तथा पचमभाव मे शुभ राशि, शुभदृष्ट हो और पुत्रेश शुभराशि मे हो तो देरी से पुत्र होता है।। लग्न मे सौम्यग्रह तथा धनभाव मे पापग्रह एव तृतीयभाव मे भी पापग्रह हो और पुत्रेश शुभराशि मे हो तो देरी से पुत्र होता है।। (पुत्रयोग समाप्त) (अब दत्तपुत्रयोग कहते है) पुत्रस्थान मे मगल तथा शनि बुध राशि मे हो और लग्नेश को बुध देखता हो अथवा युक्त हो तो 'दत्तपुत्र' होता है।।१०१-१३४।।

**पुत्रस्थाने बुधक्षेत्रे मदक्षेत्रेऽथवा भवेत् ।। मदमादियुते दृष्टे तदा दत्ता सुतादय ।।१३५।। पुत्रस्थाने बुधे क्षेत्रे बुधसस्येक्षितेऽपि वा ।। लग्नाधिपे शनौ वापि दत्तपुत्रा भवति हि ।।१३६।। पुत्रेशे मदसयुक्ते कुजे सौम्यनिरीक्षिते ।। लग्नाधिपे बुधाशे वा दत्तपुत्रा भवति हि ।।१३७।। कामेशे लाभभावस्थे पुत्रेशे शुभसयुते ।। पुत्रे मदे बुधे वापि दत्तपुत्रा भवति हि ।।१३८।। पुत्रेशे भाग्यभावस्थे भाग्येशे कर्मराशिगे ।। पुत्रे मदजदृष्टे तु दत्तपुत्रेण सतति ।।१३९।। लग्नाधिपे भृगोश्चोच्चे पुत्रे मदसमन्विते ।। कारके बलसयुक्ते दत्तपुत्रात्तु सतति ।।१४०।। पुत्रस्थानाधिपे षष्ठे लग्ने पुत्रे शनैश्चरे ।। परिपूर्णबले जीवे दत्तपुत्रात्सुतो भवेत् ।।१४१।। पुत्राधिपे रवौ लग्ने पुत्रस्थौ शनिसोमजौ ।। पुत्राधिपे बलयुते दत्तपुत्रात्सुतो भवेत् ।।१४२।। लग्नाधिपे बुधे पुत्रे कुजदृष्टिसमन्विते ।। कारके लाभराशिस्थे दत्तपुत्रात्सुतो भवेत् ।।१४३।। लग्नाधिपे गुरौ पुत्रे शनिदृष्टिसमन्विते ।। पुत्रेशे भौमराशिस्थे दत्तपुत्रा भवति हि ।।१४४।। वशान्तो हरिरुग्णगौ त्रिपुरहाब्भे भूसुते रुद्रिय सौम्ये सपुटकास्यपात्रविधिवज्जीवे च पैश्यातिथि ।। शुक्रे गोप्रतिपालन च कथित मदे च मृत्युजय ।। कन्यादानभुजगकेतुकपिला सतानसौख्यप्रद ।।१४५।। यावत्सख्या भवेद्राशिस्तावद्वार विनिर्दिशेत् ।। शिवविष्णुस्थापनाद्वालक्षयोगात्सुख भवेत् ।।१४६।।**

इति श्रीबृहत्पाराशरहोराशास्त्रेपूर्वखडे सतानभावफलादेशवर्णन नाम षोडशोऽध्याय ।।१६।।

पुत्रभाव मे बुधराशि या शनिराशि हो, शनि या मान्दी से युक्त या दृष्ट हो तो दत्तपुत्र (गोद का पुत्र) होता है।। पुत्रस्थान मे बुधराशि बुधयुक्त या दृष्ट हो और लग्नपति शनि हो तो दत्तपुत्र होता है।। पुत्रेश शनि से युक्त हो, मगल को बुध देखता हो और लग्नेश बुध के

नवांश में हो तो दत्तपुत्र होता है॥ सप्तमेश लाभस्थान में हो पुत्रेश शुभग्रहयुक्त हो पुत्रभाव में शनि या बुध हो तो दत्तपुत्र होता है॥ पुत्रेश भाग्यभाव में हो, भाग्येश दशमभाव में और पंचम शनि से दृष्ट हो तो दत्तपुत्र होता है॥ उच्चराशिस्थित शुक्र लग्नेश हो, पुत्रभाव में शनि हो और पुत्रकारक बलवान हो तो 'दत्तपुत्र' होता है॥ पंचमेश चन्द्रमा हो लग्न या पुत्रभाव में शनिश्चर हो, गुरु पूर्ण बली हो तो दत्तपुत्र होता है॥ पुत्रेश सूर्य लग्न में हो, पुत्रस्थान में शनि, बुध हो, पुत्रस्थान स्वामी बलवान् हो तो दत्तपुत्र होता है॥ लग्नस्वामी बुध हो, पंचम भाव पर मंगल की दृष्टि हो, पुत्रकारक बलवान् हो और लाभस्थान में हो तो दत्तपुत्र से सुख होता है॥१४४॥ लग्नेश गुरु पुत्रभाव में हो, पुत्रभाव पर शनि की दृष्टि हो और पुत्रेश मंगल की राशि में हो तो दत्तपुत्र होता है॥

(अब पुत्रोत्पत्ति के लिये उपाय कहते हैं)

सूर्य के दोष में 'हरिवंश पुराण' श्रवण करना, चन्द्रदोष में महादेवजी का प्रदोष व्रत तथा उद्यापन, मंगलदोष में 'रुद्राभिषेक' बुधदोष में 'सम्पुट कांसीपात्र में घृत सुवर्ण दान, गुरुदोष में पितृपूजा, शुक्रदोषमें 'गोपालन' (या गोदान) शनिदोष में मृत्युंजय मन्त्र–पुरश्चरण और राहु–केतु के दोष अथवा शापजनित दोष में पूर्वोक्त कन्यादान, सुवर्ण भुजंगदान, कपिला, गोदान आदि उपाय सन्तान सुख देनेवाले है॥ राशि की संख्या के अनुरूप उपाय की आवृत्ति करना अथवा शिव विष्णु की स्थापना करना या सन्तान गोपाल आदि के पुरश्चरण आदि से सुख कहना ॥१३५-१४६॥

इति श्री बृ० पा० हो० शा० पू० भा० प्र० सतानभावकफलादेश वर्णन नाम षोडशोऽध्याय ॥१६॥

## अथ नाभसयोगमाह

अधुना वै विस्तरतः कथिता योगास्तु नाभसा नाम्ना ॥ अष्टादशशतगुणितास्तेषां संक्षेपतो वक्ष्ये ॥१॥आश्रयाख्यास्त्रयो योगा दलयोगद्वयं ततः ॥ आकृतिर्विंशतिः संख्या योगानां सप्तक स्मृतम् ॥२॥ रज्जुयोगो मुसलश्च नलो मालाभुजंगमौ ॥३॥ गदायोगश्च शकटः शृंगाटकविहंगमौ ॥ हलवज्रयवाश्चैव कमलो वापियूपकौ ॥४॥ शरशक्तिश्च दण्डौकाकूटच्छत्रधनूं॰पि च ॥ अर्द्धेन्दुयोगश्चक्राख्यः समुद्रश्चेति विंशतिः ॥५॥ वीणादामनिकायोगः पाशकेदारशूलकाः ॥ युगगोलौ ततः प्रोक्तो योगा द्वात्रिंशका इमे ॥६॥

## अथाश्रययोगत्रयमाह

सर्वे चरस्था अपि या स्थिरस्था द्विदेहसस्था यदि वा भवति ॥ क्रमेण रज्जुर्मुसल नलश्च योगत्रयं स्यादिदमाश्रयाख्यम् ॥७॥

### नाभस योग

अब हम विस्तार से 'नाभस' नाम के जो योग पूर्व आचार्यो ने कहे हैं जो कि–सब मिलाकर १८०० है उनमें से मुख्य मुख्य योग–संक्षेप से कहेंगे ॥ तीन आश्रय नाम के योग है।

दल योग २ है। आकृति नाम के योग २० हैं, योग नाम के ७ हैं, जिनके विशेष नाम रज्जू, मूसल, नल, माला, भुजङ्गम, गदा, शकट, शृङ्गाटक, विहङ्गम, हल, वज्र, यव, कमल, वापी, यूपक, शर, शक्ति, दण्ड, नौका, कूट, छत्र, धनुष, अर्धेन्दु, चक्र और समुद्र ये २० है। वीणा, दामनिका, पाश, केदार, शूलक, युग, गोल ये [redacted] है।। सब मिलकर ३२ योग होते हैं।।१-६।।

**तीन आश्रययोग**

सब ग्रह यदि चर राशि में हो तो 'रज्जू' योग और स्थिर राशि मे 'मूसल' तथा द्विस्वभाव राशि मे हो तो 'नल' योग होता है। ये आश्रय नाम के ३ योग हुए।।७।।

## अथ दलाख्ययोगद्वयमाह

**केन्द्रत्रये सौम्यखगैस्तु माला खलग्रहैर्व्यालसमाह्वय. स्यात् ।। इद तु योगद्वितयं दलाख्य मुनीश्वरेण प्रतिपादित हि ।।८।।**

## अथाकृतियोगविंशतिमाह

**आसन्नकेन्द्रद्वयगैर्गदाख्यो लग्नास्तसंस्थै. शकटः समस्तै. ।। खबधुयातैर्विहग. प्रदिष्टः शृंगाटक लग्ननवात्मजस्थैः ।।९।। धनारिखस्थैस्त्रिमदायगैर्वा चतुर्थरन्ध्रव्ययसंस्थितैर्वा ।। नभस्तलस्थैर्हलनामयोगः किलोदितोय निखिलागमज्ञै. ।।१०।। लग्नस्मरस्थानगतै शुभाख्यै. पापैश्च मेषूरणबधुयातैः ।। वज्राभिधस्तैर्विपरीतसंस्थैर्यवश्च मिश्रै कमलाभिधानः ।।११।। त्यक्त्वा केन्द्राणि चेत्खेटा' शेषस्थानेषु संस्थिताः ।। वापीयोगो भवेदेव गदित. पूर्वसूरिभिः ।।१२।। लग्नाच्चतुर्थास्स्मरतः खमध्याच्चतुर्गृहस्थैर्गगनेचरेन्द्रैः क्रमेण यूपश्च शरश्च शक्तिर्दण्ड. प्रदिष्टः खलु जातकज्ञै. ।।१३।। लग्नाच्चतुर्थात्स्मरत' खमध्यात्सप्तर्क्षगैर्नौरथकूटसंज्ञ. ।। छत्र धनुश्चान्यगृहप्रवृत्तैर्नौपूर्वकैर्योग इहार्धचन्द्रः ।।१४।। तनोर्धनाद्येकगृहान्तरेण स्युः स्थानषट्के गगनेचरेन्द्राः ।। चक्राभिधानश्च समुद्रनामा योगा इतीहाकृतिजाश्च विंशत् ।।१५।।**

**दो दल योग**

तीन केन्द्र स्थानो मे सौम्य ग्रह हो तो 'माला' योग होता है और पापग्रह हो तो 'व्याल' योग होता है। इस प्रकार ये दो दल योग मुनीश्वरो ने कहे है।।८।।

**बीस आकृति योग**

समीप के दो केन्द्र स्थानो मे यदि सब ग्रह हों तो गद योग। लग्न और सप्तम मे सब ग्रह हो तो 'शकट' योग। दसवे और तीसरे स्थान मे 'विहग' योग। लग्न,पचम,नवममे सब ग्रह हो तो 'शृङ्गाटक' योग। दूसरे, छठे, दसवे अथवा तीसरे, सातवे, ग्यारहवे एव चौथे, आठवे, बारहवे मे सब ग्रह हो तो 'हल' नाम का योग शास्त्राचार्यो ने कहा है। लग्न सप्तम स्थान मे शुभग्रह हो, तीसरे, दसवे स्थान मे पापग्रह हो तो 'वज्र' योग होता है। इसके विपरीत हो तो 'यव' नाम का योग होता है । और मिले जुले ग्रह हो तो 'कमल' नाम का योग होता है । केन्द्र स्थान को छोडकर बाकी स्थानो मे सब ग्रह हो तो 'वापी' नाम

और स्थिर-चित्त होते है। 'नल' योग मे होनेवाले जातक कम या अधिक अङ्ग वाले, कजूस, व्यापार मे निपुण, सुडौल और बन्धु से हित चाहनेवाले होते है। 'माला' योग मे जन्म लेनेवाले जातक सदा सुखी, अन्न, वस्त्र, भोग, वाहन, सम्पन्न, बहुस्त्रीभोगी होते है। 'सर्प' योग मे होनेवाले क्रूर स्वभाव, दरिद्र, नित्य दु खी,दीन और सर्वभक्षी होते है। 'गदा' योग मे पैदा हुए जातक सदा उद्योगशील, यज्ञ आदि धार्मिक कार्य करनेवाले, शास्त्रज्ञान मे कुशल, सुवर्ण आदि सम्पत्ति से युक्त होते है। 'शकट' योग मे होनेवाले मनुष्य रोगी कुनखी, मूर्ख, सवारी से जीविका चलानेवाले, मित्र-स्वजन हीन, और दरिद्री होते हैं। 'विहग' योग मे होनेवाले मनुष्य भ्रमण रुचि, नौकर, कामी, धृष्ट और कलह प्रिय होते हैं। 'शृङ्गाटक' योग मे होनेवाले मनुष्य कलह प्रिय, युद्ध प्रेमी, सुखी, राजा के प्यारे, अच्छी स्त्रीवाले और धनी होते है।। ॥१७-२५॥

**बह्वाशिनो दरिद्रा कृषीवला दु खिताश्च सोद्वेगा ॥बधुसुहृद्भि सक्ता प्रेष्या हलसज्ञके सदा पुरुषा ॥२६॥ आद्यन्तयय सुखिन शूरा सुभगा निरीहाश्च॥ भाग्यविहीना वज्रे जाता खला विपक्षाश्च ॥२७॥ व्रतनियममगलपरा वयसो मध्ये सुखार्थपुत्रयुता ॥ दातार स्थिरचित्ता यवयोगभवा सदा पुरुषा ॥२८॥ विभवगुणाढ्या पुरुषा स्थिरायुषो विपुलकीर्तय शुद्धा ॥ शुभशतका पृथ्वीशा कमलभवा मानवा नित्यम् ॥२९॥ निधिकरणे निपुणधिय स्थिरार्थसुख सयुता सुतयुताश्च ॥ नयनसुखसप्रहृष्टा वापीयोगेन राजान ॥३०॥ आत्मविदिज्यानिरत स्त्रिया युत सत्त्वसपन्न ॥ व्रतनियमनिरतो यूपे जातो विशिष्टश्च ॥३१॥ इष्ट करणे दस्युबधनमृगयाधनसेविताश्च मासादा ॥ हिंस्रा कुशिल्पकारा शरयोगे मानवा प्रसूयते ॥३२॥ धनरहित विफलदु खितनीचालसाश्चिरायुष पुरुषा ॥ सग्रामबुद्धिनिपुणा शक्त्या जाता स्थिरा शुभगा ॥३३॥ हतपुत्रदारनि स्वा सर्वत्र च निर्घृणा स्वजनबाह्या ॥ दु खितनीचप्रेष्या दण्डभवा भवति नरा ॥३४॥ सलिलोपजीविविभवा बह्वाशा ख्यातकीर्त यो दुष्टा ॥ कृपणा मलिना लुब्धा नौसजाता खला पुरुषा ॥३५॥**

'हल' योग मे होने वाले मनुष्य बहुभोजी, दरिद्री, खेतिहर दु खी, चिन्ताशील, इष्टमित्रो मे रात दिन रहनेवाले होते है। 'वज्र योग मे पैदा होनेवाले मनुष्य बचपन और बुढापा मे सुखी, शूरवीर सौभाग्ययुक्त और निष्कामी होते है। यव योग मे पैदा हुए मनुष्य व्रत, नियम, सयमशील तथा जवानी मे सुखी धन-पुत्रयुक्त दानी और स्थिर चित्त होते है। 'कमल' योग मे होनेवाले वैभवशाली दीर्घायु कीर्तिमान्, शुद्धाचरणी, राजा होते है। 'वापी' योग मे होनेवाले धन सचयकारी, स्थिर सुख सम्पन्न, सुख सतान से युक्त, स्थिर इन्द्रियोवाले राजा के समान होते है। 'यूप' नामक योग मे पैदा हुए जातक आत्मज्ञानी, कर्मयोगी, विद्वान, साहसी, गृहस्थ-धर्म-सम्पन्न, समाज मे विशिष्ट व्यक्ति होता है। 'शर योग मे हुआ जातक अपना मतलब सिद्ध करने मे निपुण, शिकारी, चोर, ठग, मासाहारी, हिंसक और नीच कार्य करनेवाला होता है। 'शक्ति' योग मे पैदा हुए मनुष्य निर्धन, विफल मनोरथ, दु खी, नीच, आलसी, दीर्घायु, झगडालू और दृढप्रतिज्ञ होते है। दण्ड योग मे होने वाले निर्धन, स्त्रीपुत्रहीन, सर्वभक्षी, समाज बहिष्कृत, दु खी, नीच, नौकर होते है। 'नौका' योग मे पैदा हुए मनुष्य नदीवासी, बहुभोजी, विख्यात, दुष्ट, कृपण, मलिन, लोभी और चुगलखोर होते है॥२६-३५॥

अनृतकथनवधपापा निष्किंचना शठाः क्रूराः॥ कूटसमुत्था नित्यं भवति गिरिदुर्गवासिनो मनुजाः ॥३६॥ स्वजनाश्रयो दयावाञ्शानृपवल्लभः प्रकृष्टमतिः ॥ प्रथमेऽन्त्ये वयसि नरः सुखवान्दीर्घायुरातपत्री स्यात् ॥३७॥ आनृतिकगुप्तपापाश्चौराः कितवाश्च कानने निरताः ॥ कार्मुकयोगे जाता भाग्यविहीना शुभा वयोमध्ये ॥३८॥ सेनापतयः सर्वे कान्तशरीरा नृपप्रिया बलिनः ॥ मणिकनकभूषणयुता भवति योगे वार्धचन्द्राख्ये ॥३९॥ प्रणताशेषनराधिपकिरीटरत्नप्रभास्फुरितपादः ॥ भवति नरेंद्रो मनुजश्चक्रे यो जायते योगे ॥४०॥ बहुरत्नधनसमृद्धा भोगयुता धनजनप्रियाः सुसुताः ॥ उदधिसमुत्था पुरुषा स्थिरविभवाः साधुशीलाश्च ॥४१॥ प्रियगीतनृत्यवाद्यनिपुणा सुखिनश्च धनवन्तः ॥ नेतारो बहुभृत्या वीणाया कीर्तिता पुरुषाः ॥४२॥ दामिन्यामुपकारी नयधनयुक्तो महेश्वरः स्यात् ॥ बहुसुतरत्नसमृद्धो धीरो जायेत विद्वांश्च ॥४३॥ पाशे बंधनभाजः कार्ये दक्षा प्रपंचकाराश्च ॥ बहुभाषिणो विशीला बहुभृत्या सप्रतानाश्च ॥४४॥ सुबहूनामुपयोज्या कृषीवला सत्यवादिनः सुखिनः ॥ केदारे सम्भूताश्चलस्वभावा धनैर्युक्ताः ॥४५॥

'कूट' योग मे पैदा हुए मनुष्य झूठे पापी और हिंसक, दरिद्र, शठ, क्रूर और वनवासी होते हैं। 'छत्र' योग मे होने वाले आश्रय दाता दयावान, राजवल्लभ, श्रेष्ठ बुद्धिवाले, सुखी, दीर्घायु, बाल्य और वृद्ध अवस्था के सुखी होते है। धनुष योग मे होनेवाले झूठे चोर गुप्त पापी, धूर्त, जंगलवासी, भाग्यहीन, जवानी मे सुखी होते हैं। 'अर्धचन्द्रयोग' मे होने वाले जातक सेनापति, सुन्दर शरीर, राजप्रिय, बलवान् धनी होते हैं। जो महाभाग 'चक्र' योग मे जन्म लेते हैं वे राजाधिराज होते हैं और राजा लोग उनके चरणो मे सदा प्रणाम करते हैं।। 'समुद्र' योग मे जन्म लेनेवाले सदा ऐश्वर्यशाली, श्रेष्ठ आचारवाले, धनीजनो के मान्य भोगी, वैभवयुक्त बहु पुत्रवाले होते हैं।। 'वीणा' योग म होनेवाले जातक गान–वाद्य नृत्य मे निपुण और धनवान्, सुखी, नेता तथा बहुत कर्मचारीवाले होते हैं। 'दामिनी' योग मे जन्म लेनेवाले उपकारी, नीतिमान् धनी, ऐश्वर्यशाली, विख्यात बहुत परिवारवाले और धीर होते हैं। 'पाश' योग मे पैदा हुए मनुष्य कभी कभी कैद भोगनेवाले, छल छिद्रकारी, चतुर, बहु भाषी (बकवादी), शीलरहित, डपोरशख होते हैं। 'केदार' योग मे पैदा होनेवाले सत्यवादी, सुखी, चञ्चल स्वभाववाले, धनी और उपकारी होते हैं।।३६-४५।।

तीक्ष्णालसधनहीना हिंस्रा सुबहिष्कृता महाशूराः ॥ सग्रामे सब्धशब्दाः शूले योगे भवति नराः ॥४६॥ पाखण्डवादिनो वा धनरहिता वा बहिष्कृता लोके ॥ सुतमातृधर्मरहिता युगयोगे ये नरा जाताः ॥४७॥ बलसंयुक्ता विधना विद्याविज्ञानवर्जिता मलिनाः ॥ नित्यं दुःखितदीना गोले योगे भवति नराः ॥४८॥ सर्वास्वपि दशास्वेते भवेयुः फलदायिनः ॥ प्राणिनामिति विज्ञेया प्रवदंति तपाग्रजाः ॥४९॥

इति श्रीबृहत्पाराशरहोराशास्त्रेपूर्वखंडे नाभसयोगादि फलकथन नाम सप्तदशोऽध्यायः ॥१७॥

'शूल' योग में पैदा हुए मनुष्य तीखे स्वभाववाले, आलसी, धनहीन, हिंसक, बलवान् किन्तु समाज से निन्दित होते हैं। 'युग' योग में होने वाले मनुष्य पाखण्डी, झूठे, दरिद्र, समाज से निन्दित, धर्ममर्यादा रहित होते हैं।। 'गोल' योग में होनेवाले मनुष्य बलवान्, निर्धन, ज्ञान और विद्यारहित, मलिन और सदा दुःखी होते हैं। हे मैत्रेय! ये योग अपना पूरा फल विशेष करके सभी दशा में दिखाते हैं।।४६-४९।।

*इति श्रीबृहत्पाराशरहोराशास्त्रेपूर्वखण्डे भा० प्र० नाम सयोगादिफलकथन नाम सप्तदशोऽध्यायः ।।१७।।*

## अथ गजकेसरियोगमाह

केन्द्रस्थिते देवगुरौ मृगाङ्काद्योगस्तदाहुर्गजकेसरीति ।। दृष्टे युते वेदसुते शशाङ्के नीचास्तहीनैर्गजकेसरी स्यात् ।।१।। गजकेसरिसञ्जातस्तेजस्वी धनवान् भवेत् ।। मेधावी गुणसम्पन्नो राजप्रियकरो भवेत् ।।२।।

## अथाऽमलायोगमाह

यस्य जन्मसमये शशिलग्नात्सद्ग्रहे यदि च जन्मनि तस्य ।। तस्य कीर्तिरमला भुवि तिष्ठेदायुषोन्तमविनाशनसम्पत् ।।३।। लग्नाद्वा चन्द्रलग्नाद्वा दशमे शुभसंयुते ।। योगोऽयममला नाम कीर्तिराचन्द्रतारकी ।।४।। राजपूज्यो महाभोगी दाता बन्धुजनप्रियः ।। परोपकारी गुणवानमलायोगसम्भवः ।।५।।

### गज केसरी योग

चन्द्रमा से बृहस्पति केन्द्र में हो तो गजकेसरी नाम का योग होता है। और नीच और अस्तरहित ग्रहों से दृष्ट अथवा युक्त बुध या चन्द्रमा हो तो भी 'गजकेसरी' योग होता है। गजकेसरी में उत्पन्न हुआ मनुष्य तेजस्वी, धनवान, बुद्धिमान्, गुणी और राजप्रिय होता है।।१।।२।।

### *"अमला" योग*

जिस जातक के जन्म समय में चन्द्रमा यदि शुभग्रह के साथ लग्न में हो अथवा लग्न में शुभग्रह हो या चन्द्रमा के साथ शुभग्रह हो तो उस जातक को निर्मल कीर्ति होती है और जीवन पर्यन्त सम्पत्तिशाली रहता है। लग्न से या चन्द्र लग्न से दशमभाव में शुभग्रह हो तो 'अमला' नाम का योग होता है। इस योग में होनेवाले जातक का यश संसार में अनन्तकाल तक रहता है और वह जातक महाभोगी, राजपूज्य, दाता, समाजप्रिय, परोपकारी एवं गुणवान् होता है।।३-५।।

## अथ मालिकायोगमाह्

लग्नादिसप्तगृहगा यदि सप्तखेटा जातो महीपतिरनेकगजाश्वनाथः ॥ वित्तादिगे निधिपतिः पितृभक्तियुक्तो धीरोऽग्ररूपधनवान्नरचक्रवर्ती ॥१२॥ जातो यदा विक्रममालिकाया भूपः स शूरो धनिकश्च रोगी ॥ सुखादिका चेद्बहुदेशभाग्यभोगी महादानपरो महीपः॥१३॥ पुत्राद्या यदि मालिका नरपतिर्यज्वाथ वा कीर्तिमान् जातः षष्ठगृहाद्धन च सुखभृत्प्रातो दरिद्रो भवेत् ॥ कामाद्या गृहमालिका यदि बहुस्त्रीवल्लभो भूपतिर्दीर्घायुर्धनवर्जितो नरवरः स्त्रीनिर्जितश्चाष्टमात् ॥१४॥ धर्मादिग्रहमालिकागुणनिधिर्यज्वा तपस्वी विभुः कर्माद्यो यदि धर्मकर्मनिरतः सपूजितः सज्जनैः ॥ लाभाद्वराजवरांगनारमणिपतिः सर्वक्रियादक्षको जातो रिःफगृहाद्बहुव्ययकरः सर्वत्र पूज्यो भवेत् ॥१५॥

### मालिका योग

लग्न से सप्तमभाव तक सात भावों में सूर्यादि सात ग्रह प्रत्येक घर में १–१ ग्रहरूप से स्थित हों तो यह 'मालिका' या 'माला' योग होता है। इस योगमें होनेवाला हाथी घोडे युक्त राजा होता है॥ यही योग यदि धनभाव से हो तो बहुधनी, पितृभक्त, धीर, प्रतापी रूपवान्, उग्रस्वभाववाला राजाधिराज होता है और यही योग तृतीय भाव से हो तो शूरवीर, धनिक तथा राजा और रोगी होता है॥ और चतुर्थ स्थान से हो तो महादानी,महाभाग्यशाली महाराजा होता है॥ पञ्चमभाव से यदि 'माला' योग हो तो जातक यशस्वी, धार्मिक राजा होता है॥ छठेभाव से यह योग हो तो वनवासी, दरिद्र होता है॥ सप्तमभाव से 'माला' योग हो तो बहुस्त्रीभोगी, दीर्घायु राजा होता है॥ अष्टमभाव से यह योग हो तो धनहीन और स्त्री के आधीन रहनेवाला होता है॥ नवमभाव से यह योग हो तो गुणी, यज्ञ करनेवाला तथा तपस्वी होता है। दशमभाव से यह योग हो तो धर्मकर्मज्ञाता तथा सज्जन वदनीय होता है॥ लाभस्थान से यह योग हो तो महासुन्दरी भार्या होती है तथा सब कामो मे चतुर होता है॥ यही योग बारहवे भाव से हो तो बहुत खर्च करनेवाला तथा सर्वपूज्य होता है॥१२–१५॥

## अथ चामरयोगमाह्

लग्नेश्वरे केन्द्रगते स्वतुंगे जीवेक्षिते चामरनामयोगः ॥ सौम्यद्वये लग्नगृहे कलत्रे नवास्पदे वा यदि चामरः स्यात् ॥१६॥ योगे जातश्चामरे राजपूज्यो विद्वान्वाग्मी पण्डितो वा महीपः ॥ सर्वज्ञः स्याद्वेदशास्त्राधिकारी जीवेद्वर्षं सप्ततिर्वत्सराणाम् ॥१७॥

### चामर योग

लग्नेश उच्चराशि का होकर केन्द्र मे हो और गुरुदृष्टि हो तो 'चामर' योग होता है। अथवा दो शुभग्रहो मे से १–१ लग्न और सप्तम मे इसी प्रकार नवम और आस्पद( १० )मे हो तो भी 'चामर' योग होता है। इस चामर योग मे होनेवाला राजपूज्य, विद्वान्, वाक्पटु, ज्ञानी, वेद और शास्त्र का अधिकारी ७० वर्ष आयु वाला राजा होता है॥१६॥१७॥

## अथ शङ्खयोगमाह

अन्योन्यकेंद्रगृहगौ सुतशत्रुनाथौ लग्नाधिपे बलयुते यदि शखयोग ॥ लग्नाधिपे च गगनाधिपतौ चरस्थे भाग्याधिपे बलयुते तु तथा वदति ॥१८॥ शखे जातो भोगशीलो दयालु स्त्रीपुत्रार्थ: क्षेत्रवान्पुण्यकर्मा॥ शास्त्रज्ञानाचारसाधुक्रियावान् जीवेद्वर्षं वत्सराणामशीतिम् ॥१९॥

### शखयोग

पचम तथा षष्ठभावस्वामी परस्पर केन्द्र मे हो और लग्नेश बलवान् हो तो 'शख' योग होता है। इसी प्रकार लग्न, दशम के स्वामी चरराशि मे हो और भाग्येश बलवान् हो तो भी 'शख' योग होता है।। शख योग मे होनेवाला भोगी, दयालु, धन, स्त्री पुत्र वाला, भूमिपति, पुण्यात्मा, शास्त्रज्ञानी श्रेष्ठकर्म करनेवाला और प्राय ८० वर्ष का दीर्घायु होता है।।१८।।१९।।

## अथ भेरीयोगमाह

स्वात्योदयास्तभवनेषु वियच्चरेषु कर्माधिपे बलयुते यदि भेरियोग केन्द्रे गते सुरगुरौ सितलग्ननाथौ भाग्येश्वरे बलयुते तु तथैव वाच्यम् ॥२०॥ दीर्घायुषो विगतरोगभया नरेंद्रा बह्वर्थभूमिसुतदारयुता प्रसिद्धा ॥ आचारभूरिसुखशौर्यमहानुभावा भेरीप्रजातमनुजा निपुणा. कुलीना ॥२१॥

### भेरी योग

लग्न, द्वितीय, द्वादश और सप्तमस्थान मे सब ग्रह हो और दशमेश बलवान् हो तो 'भेरी' योग होता है। तथा लग्नेश, शुक्र, गुरु केन्द्र मे हो तथा भाग्येश बलवान् हो तो भी 'भेरी' योग होता है।।२०।। इस योग मे होनेवाला जातक रोगभयरहित धनभूमिसम्पन्न, स्त्री पुत्र युक्त, दीर्घायु, प्रसिद्ध, आचारवान् सुखी तथा शूरवीर कुलीन राजा चतुर होता है।।२०-२१।।

## अथ मृदंगयोगमाह

उच्चग्रहांशकपतौ यदि केंद्रकोणे तुगस्वकीयभवनोपगते बलाढ्ये ॥ लग्नाधिपे बलयुते च मृदगयोग कल्याणरूपनृपतुल्ययश प्रद' स्यात् ॥२२॥

### मृदग योग

उच्चराशिस्थित नवांशस्वामी यदि केन्द्र या त्रिकोण स्थान मे हो और लग्नेश बलवान होकर उच्च या स्वगृही हो तो 'मृदग' योग होता है। इस योग मे होनेवाला सुन्दर रूप, गुणो से युक्त राजा के समान यश प्रतापवाला होता है।।२२।।

## अथ श्रीनाथयोगमाह

कामेश्वरे कर्मगते स्वतुगे कर्माधिपे भाग्यपसयुते च ॥ श्रीनाथयोग' शुभदस्तदानीं जातो नर. शक्रसमो नृपाल' ॥२३॥

### श्रीनाथ योग

सप्तमेश दशमभाव में उच्चराशि में हो और दशमेश भाग्यस्थान में हो तो 'श्रीनाथ' योग होता है।। इस योग में सजात मनुष्य महाप्रतापी राजा होता है।।२३।।

## अथ शारदायोगमाह

योगः शारदसंज्ञकः सुतगते कर्माधिपे चंद्रजे केन्द्रस्थे दिननायके निजगृहप्राप्तेतिवीर्यान्विते।। चंद्रात्कोणयुते पुरंदरगुरौ सौम्यत्रिकोणे कुजे लाभे वा यदि देवमंत्रिणि बुधास्तच्छारदासंज्ञकः ।।२४।। स्त्रीपुत्रबंधुसुखरूपगुणानुरक्ता भूपप्रियागुरुमहीसुरदेवभक्ताः ।। विद्याविनोदरतिशील तपोबलाढ्या जाताः स्वधर्मनिरता भुवि शारदाख्ये ।।२५।।

### शारदा योग

पञ्चमेश दशमभाव में हो और बुध केन्द्र में तथा सूर्य पूर्ण बलयुक्त स्वगृही हो तो 'शारदा' योग होता है।। तथा चन्द्रमा से गुरु त्रिकोण स्थान में हो, सौम्यग्रह त्रिकोण में, मंगल लाभस्थान में या गुरु लाभ में हो तो 'शारदा' योग होता है। इस योग में होनेवाला स्त्री पुत्र-युक्त, सुखी, रूपवान्, गुणी, राजप्रिय, गुरु देवता का भक्त, धर्मशील, विद्यावान्, कामक्रीडा रत तपोबल संपन्न होता है।।२४।।२५।।

## अथ मत्स्ययोगमाह

लग्नधर्मगते पापे पंचमे सदसद्युते ।। चतुरस्र गते पापे योगोऽयं मत्स्यसंज्ञकः ।।२६।। कालज्ञः करुणासिंधुर्गुणधीर्बलरूपवान् ।। यशोविद्यातपस्वी च मत्स्ययोगसमुद्भव. ।।२७।।

### मत्स्य योग

लग्न तथा नवमभाव में पापग्रह, पंचमभाव में शुभपाप मिश्रितग्रह हो और केन्द्र में भी पापग्रह हो तो 'मत्स्य' योग होता है।। इस योग में होने से दैवज्ञ, दयावान्, बल बुद्धि गुण रूपवाला, यशस्वी विद्वान् तपस्वी होता है ।।२६-२७।।

## अथ कूर्मयोगमाह

कलत्रपुत्रारिगृहेषु सौम्याः स्वतुंगमित्रांशकराशियाता. ।। तृतीयलाभोदयगास्त्वसौम्या मित्रोच्चसस्थो यदि कूर्मयोगः ।।२८।। विख्यातकीर्तिर्भुवि राज्यभोगी धर्माधिकः सत्त्वगुणप्रधानः ।। धीरः सुखी वागुपकारकर्ता कूर्मोद्भवो मानवनायको वा ।।२९।।

### कूर्म योग

५।६।७ स्थानों में सौम्यग्रह,उच्च स्वगृही या मित्रनवांश में हो और लग्न, तृतीय तथा लाभस्थान में उच्च या मित्रराशि में पापग्रह हो तो 'कूर्मयोग' होता है।।२८।। इस योग में होनेवाला विख्यात् कीर्ति, राजसमान ऐश्वर्यसम्पन्न, धर्मात्मा सात्त्विक, धीर, सुखी, व्याख्याता जननायक होता है ।।२८-२९।।

## अथ खड्गयोगमाह

भाग्येशे धनभावस्थे धनेशे भाग्यराशिगे ॥ लग्नेशे केंद्रकोणस्थे खड्गयोग इतीरितः ॥३०॥ वेदार्थशास्त्रनिखिलागमतत्त्वयुक्तिबुद्धिप्रतापबलवीर्यसुखानुरक्ताः ॥ निर्मत्सराश्च निजवीर्य-महानुभावाः खड्गे भवति पुरुषाः कुशलाः कृतज्ञाः ॥३१॥

### खड्ग योग

भाग्येश धनभाव में एव धनेश भाग्यस्थान में हो और लग्नेश केन्द्र या त्रिकोण में हो तो 'खड्गयोग' होता है। इस योगमें होनेवाला वेदादि शास्त्र का ज्ञाता, बुद्धिमान्, प्रतापी, सुखी, द्वेषरहित, अपने उद्योग से उन्नति करनेवाला कृतज्ञ और कुशल होता है॥३०॥३१॥

## अथ लक्ष्मीयोगमाह

केंद्रमूलत्रिकोणस्थे भाग्येशे परमोच्चगे ॥ लग्नाधिपे बलाढ्ये च लक्ष्मीयोग इतीरितः ॥३२॥ गुणाभिरामो बहुदेशनाथो.विद्यामहाकीर्तिरनंगरूपः ॥ दिगंतविश्रांतनृपालवंद्यो राजाधिराजो बहुदारपुत्रः ॥३३॥

### लक्ष्मी योग

परमोच्चराशि स्थित भाग्येश केन्द्र या त्रिकोण में हो और लग्नेश बलवान् हो तो 'लक्ष्मी' नामक योग होता है॥ इस योग में सञ्जात व्यक्ति विद्वान्, सुन्दरराजा तथा महाराजाधिपति एव अनेक स्त्री पुत्र वाला होता है॥३२॥३३॥

## अथ कुसुमयोगमाह

स्थिरलग्ने भृगौ केंद्रे त्रिकोणेंदौ शुभेतरे ॥ मानस्थानगते सौरे योगोयं कुसुमो भवेत् ॥३४॥ दाता मही-मडलनाथवंद्यो भोगी महावंशजराजमुख्यः ॥ लोके महाकीर्तियुतः प्रतापी नाथो नराणा कुसुमोद्भवः स्यात् ॥३५॥

### कुसुम योग

स्थिर राशि का लग्न हो, शुक्र केन्द्र में तथा चन्द्रमा त्रिकोण में एव पापग्रह और शनि मानस्थान (दशम) में हो तो 'कुसुम' योग होता है॥३४॥ इस योग में होने से दानशील राज वैद्य भोगी, राजाधिराज, यशप्रताप युक्त होता है॥३५॥

## अथ पारिजातयोगमाह

विलग्ननाथस्थितराशिनाथस्थानेशराशीशतदंशनाथाः ॥ केन्द्रत्रिकोणोपगता यदि स्युः स्वतुंगगा वा यदि पारिजातः ॥३६॥ मध्यांतसौख्यः क्षितिपालवंद्यो युद्धप्रियो वारणवाजियुक्तः ॥ स्वकर्मधर्माभिरतो दयालुर्योगो नृपः स्याद्यदि पारिजातः ॥३७॥

### पारिजात योग

लग्नेश, तथा लग्नेश जिस राशि मे हो उस राशि का स्वामी तथा वह जिस राशि मे हो, एव उस राशि का स्वामी तथा वह भी जिस राशि मे हो, उस राशि का स्वामी, और उनके नवमांश के स्वामी ये यदि उच्च राशि के हो अथवा केन्द्र या त्रिकोण मे हो तो 'पारिजात' योग होता है॥३६॥ इस योग मे जवानी तथा वृद्धावस्था मे सुखी, राजवद्य, युद्धप्रिय, हाथी घोडेयुक्त, स्वकर्म धर्मरहित, दयालु तथा राजा होता है॥३६-३७॥

## अथ कलानिधियोगमाह्

**द्वितीये पञ्चमे जीवे बुधशुक्रयुतेक्षिते ॥ क्षेत्रे तयोर्वा सम्प्राप्ते योगः स्यात्स कलानिधिः ॥३८॥ कामी कलानिधिभवः सुगुणाभिरामः सस्तूयमानचरणो नरपालमुख्यैः ॥ सेनातुरंगमदवारण-शंखभेरीवाद्यान्वितो विगतरोगभयारिसंघः ॥३९॥**

### कलानिधियोग

द्वितीय या पचमभाव मे गुरु हो तथा बुध, शुक्र से युक्त या दृष्ट हो अथवा इनकी राशि मे हो तो 'कलानिधि' योग होता है॥३८॥ 'कलानिधि' योग मे जन्म लेनेवाला कामी, गुणी, सुन्दर तथा राजपूज्य, सेना आदि से युक्त, नीरोग, निर्भय तथा शत्रुजेता होता है॥३८॥३९॥

## अथ पारिजातादियोगमाह्

**स पारिजातद्युचरः सुखानि नीरोगतामुत्तमवर्गयातः ॥ सगोपुरांशे यदि गोधनानि सिंहासनस्थः कुरुते विभूतिम् ॥४०॥ करोति पारावतभागयुक्तो विद्या यश श्रीविपुल नराणाम् ॥ स देवलोके बहुमानसेनामैरावतस्थो यदि भूपतित्वम् ॥४१॥**

### पारिजात योग मे विशेष

पारिजात योगकारक ग्रह षोडशवर्ग मे—श्रेष्ठवर्ग मे हो तो जातक को नीरोग, और पूर्वोक्त 'गोपुराश' मे हो तो गोधन, और सिंहासन मे हो तो 'राजसिंहासन' के योग्य विभूति होती है॥४०॥ और पारावतांश मे हो तो विद्या, यश, धन ऐश्वर्यशाली होता है॥ और 'ऐरावतांश मे' हो तो इन्द्र के समान राजा होता है॥४१॥

## अथ लग्नाधियोगमाह

**लग्नाच्च दाराष्टमगेहसस्थै. शुभैर्न पापग्रहयोगदृष्टैः ॥ लग्नाधियोगो भवति प्रसिद्धः पापैः सुखस्थानविवर्जितैश्च ॥४२॥ लग्नाधियोगे बहुशास्त्रकर्ता विद्याविनीतश्च बलाधिकारी ॥ मुख्यस्तु निष्कापटिको महात्मा लोके यशोवित्तगुणाधिकः स्यात् ॥४३॥**

### लग्नाधियोग

लग्न से सप्तम तथा अष्टमभाव मे शुभग्रह हो और पापग्रहो मे युक्त या दृष्ट न हो तो

'लग्नाधियोग' होता है किन्तु चतुर्थभाव मे पापग्रह न होना चाहिए॥४२॥ लग्नाधियोग मे होनेवाला बहुशास्त्रज्ञाता, विद्वान्, विनीत सेनापति जनमान्य, निष्कपट, यश–धन–गुण–सम्पन्न महात्मा होता है॥४३॥

## अथ चन्द्रयोगादीनाह

सहस्ररश्मितश्चन्द्रे कण्टकादिगते सति ॥ न्यूनमध्यवरिष्ठानि धनधीनैपुणानि च ॥४४॥ स्वांशेऽधिमित्रस्यांशे वा स्थिते वा दिवसे शशी ॥ गुरुणा दृश्यते तत्र जातो वित्तसुखान्वित ॥४५॥ स्वाधिमित्रांशगश्चन्द्रो दृष्टो दानवमन्त्रिणा ॥ निशासु कुरुते लक्ष्मीं छत्रध्वजसमाकुलाम् ॥ विपर्ययस्थे शीतांशौ जायतेऽल्पधनो नरा ॥४६॥

### चन्द्र योग

सूर्य से चन्द्रमा केन्द्र या त्रिकोणस्थान मे हो तो योग बलानुसार उत्तम, मध्यम और कनिष्ठरूप मे बुद्धि, धन और वैभव होते है॥ चन्द्रमा अपने नवांश या अतिमित्र के नवांश मे हो तथा दिन का जन्म लग्न हो तथा गुरु की दृष्टि हो तो धनी और सुखी होता है॥ अधिमित्रांश मे स्थित चन्द्र शुक्र से दृष्ट तथा रात्रि का जन्म हो तो ध्वजा छत्र–युक्त राजा होता है॥ इससे विपरीत होने से सामान्य धनवाला होता है ॥४४–४६॥

## अथाऽधियोगमाह

शशिन सौम्या षष्ठे द्यूने वा निधनसंस्थिता वा स्यु ॥ स्यादधियोगे जात सौम्यै सबलैर्धराधीश ॥मध्यबलैर्मंत्री स्यादधमबले सैन्यनायक स स्यात् ॥४७॥ चन्द्राद्वृद्धिगतै सौम्यो धर्मशीलो महाधनी ॥ द्वाभ्या समोऽल्पवसुमानेकेन परिकीर्तित ॥चन्द्राल्लग्नाद्ग्रहाभावे दरिद्रो दुःखितो भवेत् ॥४८॥

### अधियोग

चन्द्रमा से ६।७।८। स्थान मे सौम्यग्रह हो और बलवान् हो तो राजा तथा मध्यबली हो तो मन्त्री, और हीनबली हो तो सेनानायक होता है॥ चन्द्रमा से वृद्धिस्थान (३।६।१०।११) मे सौम्यग्रह हो तो धर्मात्मा तथा श्रेष्ठ आचारवाला होता है। दो सौम्यग्रहो स फल समान, और एक ग्रह से अल्पधनवाला होता है॥ चन्द्र या लग्न से उपर्युक्त स्थान मे कोई भी ग्रह नहीं हो तो दरिद्र और दुःखी होता है॥४७॥४८॥

## अथ सुनफाऽनफादुरधराकेमद्रुमयोगानाह

शीतांशोर्द्विविणस्थितैश्च सुनफायोगोऽनफाव्ययस्थितै स्वात्यस्थै खचरैर्भवेद्दुरधरा पकेरुहेशोज्झिते ॥ चेद्वित्तव्ययगा न चेद्दिविचरा केमद्रुम स्यात्तदा प्राचीनैर्मुनिभि स्मृता श्रुतिमिता योगा शशाकोद्भवा ॥४९॥

### सुनफा, अनफा, दुरधरा, केमद्रुम योग

चन्द्रमा से दूसरे स्थान में ग्रह हो तो 'सुनफा' योग होता है। (ग्रह ३ या तीन से अधिक होने चाहिए) और द्वादशभाव में यदि तीन या तीन से अधिक ग्रह हो तो 'अनफा' योग होता है।। और सूर्य छोडकर दूसरे तथा द्वादश भाव में ग्रह हो तो 'दुरधरा' योग और दूसरे बारहवे स्थान में कोई भी ग्रह नहीं हो तो 'केमद्रुम' योग होता है।।४९।।

## अथ सुनफायोगफलमाह

**भूमीपतेश्च सचिव सुकृती कृती च नून भवेन्निजभुजार्जितवित्तयुक्त ।। ख्यात सदाखिलजनेषु विशालकीर्त्या बुद्ध्याधिकश्च मनुज सुनफाभिधाने ।।५०।।**

### सुनफा योग फल

*राजमन्त्री, पुण्यकर्ता, कर्मवीर, स्वोपार्जित धन से धनी, समाज में विख्यात, कीर्तिमान्* तथा बुद्धिमान् होता है।५०।।

## अथाऽनफायोगफलमाह

**प्रभुर्विनीत शुभवाग्विलास सच्छीलशाली गुणपूर्तियुक्त ।। उदारकीर्ति. स्मरतुष्टचित्तो नित्य नर स्यादनफाभिधाने ।।५१।।**

### अनफा योग फल

विनीत, मान्य, मिष्टभाषी, सुशील, गुणी, यशस्वी तथा विरक्त होता है।।५१।।

## अथ दुरधरायोगफलमाह

**सद्वित्तसद्वारणवाहधात्रीतीख्याभियुक्त सतत हतारि ।। कातासुनेत्रावललालस स्याद्योगे सदा वौरधरे मनुष्य ।।५२।।**

### दुरधरा योग फल

इस योग में होनेवाला, धनी वाहनयुक्त, सुखी, शत्रुहीन, तथा कामी होता है।।५२।।

## अथ केमद्रुमफलमाह

**सद्वित्तसूनुवनितात्मजनैर्विहीन प्रेष्यो भवेत्तु मनुजो हि विदेशवासी ।। नित्य विरुद्धधिषणो मलिन कुवेष केमद्रुमे च मनुजाधिपते सुतोऽपि ।।५३।।**

### केमद्रुम योग फल

स्त्री, पुत्र, धनहीन, भृत्यवृत्ति (नौकरी) विदेशवासी, विरुद्धबुद्धि, मलीन तथा कुवेशवाला होता है।।५३।।

## अथ केमद्रुमभंगमाह

चंद्रचतुर्थैः सुनफा दशमस्थितैः कीर्तितोऽनफा विहगैः उभयस्थितैर्दुरधरा केमद्रुमसंज्ञितोऽन्यथा योगः ॥५४॥ यद्राशिसंज्ञे शीतांशुर्नवांशे जन्मनि स्थितः ॥ तद्द्वितीयस्थितैर्योगःसुनफाख्यः प्रकीर्तितः ॥५५॥ द्वादशैरनफा ज्ञेयो ग्रहैर्द्विद्वादशस्थितैः ॥ प्रोक्तो दुरधरायोगोऽन्यथा केमद्रुमो मतः ॥५६॥ प्रालेयांशुः सूतिकाले यदा वा सर्वैः खेटैर्वीक्ष्यमाणः करोति ॥ दीर्घायुष्यं राजयोगं मनुष्यं सत्कोशाढ्यं हंति केमद्रुमं च ॥५७॥ सर्वे खेटाः केन्द्रतुर्येषु सस्था दुष्टो योगश्चापि केमद्रुमोऽयम् ॥ दुष्टं सर्वं स्व फलं संविहाय कुर्युः पुंसां सत्फलं वै विचित्रम् ॥५८॥ सर्वेषु चंद्रयोगेषु चेद यत्नाद्विचिंतयेत् ॥ केमद्रुमादिका योगा संभवेऽस्य लयं ययुः ॥५९॥

### केमद्रुमभंग योग

चन्द्रमा से चतुर्थ स्थान ग्रहो के होने से 'सुनफा' योग और दशमभाव मे होने से 'अनफा' योग होता है। दोनो ४।१० स्थानो मे ग्रहो के होने से 'दुरधरा' योग अन्यथा होने से 'केमद्रुम' योग होता है।।५४।। जन्मलग्न मे चन्द्रमा जिस नवांश मे हो उससे द्वितीय नवांश मे ग्रह हो तो 'सुनफा' और द्वादश नवमांश मे ग्रह हो तो 'अनफा' योग होता है।।५५।। तथा २।१२ नवांश मे ग्रहो के होने से 'दुरधरा' योग अन्यथा 'केमद्रुम' योग होता है।।५६।। जन्मलग्न मे चन्द्रमा पर सब ग्रहो की दृष्टि हो तो 'केमद्रुम' योग का बाधक होकर श्रेष्ठ धन युक्त दीर्घायु और राजयोग कारक होता है।।५७।। सारे ग्रह चारो केन्द्र स्थानो मे हो तो यह भी 'केमद्रुम' योग होता है परन्तु यह योग अपना सब दुष्ट फल छोड़कर सब प्रकार शुभफल करता है।।५८।। सब प्रकार के चन्द्रयोगो के इनका अवश्य ही विचार करना चाहिए। योगायोग विचार से 'केमद्रुम' योग के भग होने की अधिक सभावना रहती है।।५९।।

## अथ रवियोगमाह

वेसिश्चोत्यगतैर्ग्रहैर्विधुविहीनैर्वेशिः शशांकोज्झितैर्भानोस्तूभयगैस्तदोभयचरीयोगः स्मृतः प्राक्तनैः ॥ किंचित्सद्वचनेषु नैव नियमोऽस्य नरश्चानृतोऽत्यत कष्टकरो नरश्च मृदुदृग् स्याद्वेसियोगोद्भवः ॥६०॥

### रवियोग

चन्द्रमा रहित तीन या तीन से अधिक ग्रह सूर्य से बारहवे हो तो 'वेसि' योग होता है और सूर्य से द्वितीयभाव में हों तो 'वेशि' योग होता है। तथा सूर्य से २।१२ स्थानो मे (चन्द्ररहित) ग्रह हो तो 'उभयचरी' योग होता है।

वेसियोगफल–'वेसि' योग मे होनेवाले के वचन का कोई सिद्धान्त नही (कभी कुछ २ कहता है) अत झूठा, कष्टकारी किन्तु दर्शन का मीठा होता है।।६०।। (देखने का मीठा करनी का कड़ा–छिपी छुरी होती है।)

## अथ वेशियोगफलम्

तिर्यग्दृष्टिः सत्यसत्यानुकम्पी मर्त्योऽत्यर्थं दीर्घकायोऽलसश्च ॥ मूर्तौ यस्य स्याद्यदा वेशियोगस्त्वल्पद्रव्योवाग्विलासाधिशाली ॥६१॥

### वेशियोग फल

जिसका जन्म 'वेशि' योग मे होता है, वह सत्वगुणी, सत्यभाषी, तिरछी नज़रवाला, लम्बा कद, आलसी, दरिद्र तथा वाचाल होता है।।६१।।

## अथोभयचरीफलमाह

यस्य स्याज्जनने किलोभयचरीयोगस्य चेत्सम्भवः सोत्पत समवायवानपि तदा मर्त्यो भवेत्सद्यशाः ।। नात्युच्चः प्रबलायलाञ्छितनयायुक्तः समृद्धः सदा ह्यत्यर्थं स्थिरमानस. सरलवृक सर्वसहः सन्मतिः ।।६२।।

### उभयचरी योगफल

जिसके जन्मलग्न मे उभयचरी योग होता है, वह कजूस (अत सग्रही) यशस्वी, मझोला कदवाला, लक्ष्मीवान्, सरल, स्थिर बुद्धि और धीर होता है।।६२।।

## अथ पुरुषस्त्रीनपुंसकजन्मज्ञानमाह

बलाबलं विलोक्यैषां ग्रहाणां योगकारिणाम् ।।६३।। स्त्रीपुंसनिर्णय. क्लीबयोगास्तु तदसंभवा. ।।६४।। ओजभे च विषमांशकोपगैर्लग्नचन्द्रगुरुभास्करैर्नरः।। स्यात्तथापि समभे समांशगै. स्त्रीनिषेकसमये प्रसूतिषु ।।६५।। लग्न त्यक्त्वा च विषमे पुत्रदो भास्करात्मजः ।। समे कन्याप्रदः प्रोक्तो नान्यग्रहनिरीक्षित ।।६६।।

### पुरुष, स्त्री, नपुसक ज्ञान

योगकारक ग्रहो का बलाबल विचार करके पुरुष स्त्री का जन्म जानना और उन पुरुषयोग तथा स्त्रीयोग के अभाव मे नपुसक का जन्म जानना।। लग्न मे विषमराशि तथा विषम नवाश हो और चन्द्र, सूर्य, गुरु विषम नवाश मे हो तो 'नर' का जन्म हो। एव समराशि और चन्द्र, सूर्य, गुरु सम नवाश मे हो तो 'कन्या' जन्म होता है।। लग्न को छोडकर शनि विषमराशि (या विषम नवाश) मे हो तो पुत्र और समराशि (या सम नवाश) मे हो तो कन्या होती है ।।६३–६६।।

## अथ षट्क्लीबयोगानाह

अन्योन्यं रविशशिनौ विषमाविषमर्क्षगौ निरीक्ष्येते ।। इन्दुजरविपुत्रौ वा तथैव हि नपुंसकं कुरुतः ।।६७।। वक्रो विषमे सूर्यः समभश्चैव परस्परालोकात् ।। विषमर्क्षे लग्नेंदुसमराशिगं कुजोऽप्यवलोकयति ।।६८।। बुधचन्द्रौ कुजदृष्टौ विषमर्क्षसमर्क्षगौ तथैवोक्तौ ।। ओजनवांशकसंस्था लग्नेन्दुसितास्तथैवोक्ताः ।।६९।।

### नपुंसक छह योग

सूर्य चन्द्रमा विषम सम राशियों मे होकर परस्पर देखते हो अथवा चन्द्रमा और शनि इसी प्रकार हो तो जातक 'नपुसक' होता है।। मगल विषम राशि मे सूर्य सम राशि मे होकर

परस्पर देखते हों अथवा लग्न विषम राशि में चन्द्रमा सम राशि में दोनों को मंगल देखता हो॥ अथवा बुध विषम राशि में चन्द्रमा सम राशि में दोनों को मंगल देखता हो अथवा विषम नवमांशक में लग्न, चन्द्रमा और शुक्र हों तो नपुंसक होता है॥ ये ६ योग नपुंसक के कहे गये॥६७॥६८॥६९॥

## अथ प्राणिनां वृत्तिनिर्णयमाह

**अर्थाप्तिं कथयेद्विलग्नशशिनो प्राबल्यतः खेचरैर्मानस्थैः पितृमातृशत्रुससुहृद्भ्रात्रादिभिः स्याद्धनम् ॥ सूर्याद्वा दिननाथलग्नशशिना मध्ये बली यस्ततः कर्मेशांशनवांशराशिपवशाद्-वृत्तिं जगुस्तद्विदः ॥७०॥ भैषज्यचामीकरतोयपानपण्येन मुक्तामणिविप्रलम्भात् ॥ अन्योऽन्यवृत्तागमवृत्तिमार्गाज्जीवत्यसौ वासरनायकांशे ॥७१॥ मन्त्रोपदेशरसवादविनोदमार्गै-र्वृत्तिं जगुः सकलशास्त्रपुराणमार्गैः ॥ ज्ञानोपदेशपथिभिः क्षितिपालपूज्यो जीवत्यसौ खलु पुमान्विननायकांशे ॥७२॥ जलोद्भवानां क्रयविक्रयेण कृषेश्च मृद्भादविनोबमार्गात् ॥ राजाङ्गनासंश्रयवृत्तिरूपान्निशाकरांशे वसनक्रयाद्वा ॥७३॥ धातोर्विवादेन रणप्रहारात्तथा-प्रिवादात्कलहप्रवृत्त्या ॥ जीवत्यसौ साहसमार्गरूपया धरासुतांशे यदि चौरवृत्त्या ॥७४॥ शिल्पादिकाव्यागमशास्त्रमार्गाज्ज्योतिर्गणज्ञानवशाद्बुधांशे ॥ वेदार्थवेदाध्ययनाज्जपाच्च पुरोहितव्याजवशात्प्रवृत्तिः ॥७५॥ जीवांशके भूसुरदेवतानामुपासकाध्यापकमार्गरूपात् ॥ पुराणशास्त्रागमनीतिमार्गाद्धर्मोपदेशेन कुसीदमाहुः ॥७६॥ सुवर्णमाणिक्यगजाश्वमूल्याद्गवां क्रयाज्जीवनमाहुरार्याः ॥ गुडौदनक्षीरदधिक्रयेण स्त्रीणां प्रलोभेन भृगोः सुतांशे ॥७७॥ शन्यंशके कुत्सितमार्गवृत्त्या शिल्पादिभिर्दारुमयैर्वधाद्यैः ॥ चित्यस्तभाराज्जनविप्रलम्भादन्यो-न्यवैरोद्भवमूलमार्गात् ॥७८॥ स्वक्षेत्रे स्वनवांशके सुहृदि वा स्वास्युच्चभागे यदा स्वद्रेष्काणचतुष्टयेषु सहिता मूलत्रिकोणेषु वा ॥ ततस्कालबलान्वितास्तु खचरा वर्गोत्तमांशेऽपि वा ते सर्वे शुभदा भवति हि तदा स्यात्तद्दशादावपि ॥७९॥**

**इति श्रीबृहत्पाराशरहोराशास्त्रे पूर्वखण्डे बहुयोगफलकथनं नाम अष्टादशोऽध्यायः ॥१८॥**

### मनुष्यों की वृत्ति निर्णय

लग्न और चन्द्रमा का बलाबल विचार करके दशम भाव में स्थित ग्रह के अनुसार पिता, माता, शत्रु मित्र, भ्राता आदि के द्वारा धन की प्राप्ति होती है॥ अथवा सूर्य, लग्न और चन्द्रमा में जो बलवान् हो तथा दशम भाव में स्थित जो राशि वा नवमांश उसके स्वामी के अनुसार वृत्ति का निर्णय करें॥७०॥ दशमेश राशि नवमांश पति यदि सूर्य हो तो औषधि-विक्रय, सुवर्ण-विक्रय, शर्बत आदि विक्रय, मोती-माणिक आदि जवाहरात से आजीविका हो अथवा ठगी से अथवा दलाली से आजीविका हो॥ सूर्य के नवमांश में हो तो मन्त्रोपदेश, रसधातु व्यापार, खेल, बाजीगरी आदि शास्त्रपुराण उपदेश से, या ज्ञानोपदेश से प्रसिद्ध और राजपूज्य होता है॥ चन्द्रमा के नवांश में जन्म हो तो जलजीव मछली आदि के व्यापार से या कृषि (खेती) से या मिट्टी के बने हुए पदार्थों से या राजाङ्गना सम्पर्क से अथवा वस्त्र व्यापार से जीवनयापन होता है॥ उसी प्रकार मंगल के नवमांश में धातु का व्यापार, मुकदमाबाजी, मारपीट, आग लगाना, लड़ाई झगड़ा, अथवा साहस के कार्यों से

अथवा चोर वृत्ति से आजीविका होती है।। बुध के नवमांश के शिल्प व्यापार, काव्य–कविता शास्त्रो द्वारा, ज्योतिष से, वेदपाठ आदि से, पुरोहिति या ब्याज से आजीवन होता है। बृहस्पति के नवमांश होने पर देवोपासना अथवा अध्यापन कार्य, पुराण शास्त्र आदि का उपदेश, व्याख्यान वृत्ति या ब्याज आदि से आजीवन होता है। शुक्र के नवमांश मे सुवर्ण, मणि–माणिक, हाथी घोड़े, गाय, आदि से अथवा अन्न, गुड, दूध, दही आदि के व्यापार से जीवनयापन होता है। शनि के नवमांश मे निन्दित वृत्ति से अथवा लकडी के खेल खिलौने से, अथवा हिंसक वृत्ति से, भाडे से, ठगी से, परस्पर वैर कराने से तथा वकालत से आमदनी होती है।। किसी भी ग्रह के शुभफल देने मे ये निमित्त होते हैं–स्वक्षेत्री होना, स्व नवांश मे होना, मित्र राशि या मित्र नवांश में होना, अपने उच्च राशि का या उच्च नवांश मे होना, केन्द्र या त्रिकोण मे होना, अपने द्रेष्काण मे होना, मूल त्रिकोण या वर्गोत्तम होना, जन्मकाल मे पूर्ण बली होना, इस कथित स्वरूप मे ग्रह अपनी दशा और अन्तर्दशा मे अपना पूर्ण फल करते है। अर्थात् इन कथित योगो मे भी ग्रह का स्वरूप कथित रीति से देखना चाहिए।।७०-७९।।

इति श्रीबृहत्पाराशरहोराशास्त्रेपूर्वखण्डे भावप्रका॰ बहुयोगफलकथन नाम अष्टादशोऽध्याय ।।१८।।

## अथ मारकभेदाध्यायः

त्रिविधाश्चायुषो योगा स्वल्पायुर्मध्यमोत्तमा ।। द्वात्रिंशात्पूर्वमल्पायुर्मध्यमायुस्ततो भवेत् ।। चतुःषष्ट्या पुरस्तात्तु ततो दीर्घमुदाहृतम् ।।१।। उत्तमायु शतादूर्ध्वं ज्ञातव्य मुनिसत्तम ।। चतुर्विंशतिवर्षाणामायुर्ज्ञातु न शक्यते ।।२।। जपहोमचिकित्साद्यैर्बालरक्षा तु कारयेत् ।। पित्रोर्दोषैर्मृता केचित्केचिन्मातृग्रहैरपि ।।३।। अपरेऽरिष्टयोगाच्च त्रिविधा बालमृत्यव ।। अल्पायुर्योगजातस्य विपत्तारा मृति वदेत् ।।४।। जातस्य मध्यमे योगे प्रत्यरिस्तु मृतिर्भवेत् ।। दीर्घायुर्योगजाताना वधभे तु मृतिर्भवेत् ।।५।। त्रिषु योगेषु सर्वेषु प्रत्येक त्रिविध भवेत् ।।६।। अल्पायुरल्पमध्य तु पूर्णायुस्त्रिविध भवेत् ।। मध्यमादल्पमध्य तु पूर्णायुस्त्रिविध भवेत् ।।७।। दीर्घायुषोऽल्पमध्य तु पूर्णायुस्त्रिविध भवेत् ।। एव बहुविध प्रोक्त आयुषस्तु विनिर्णय ।।८।। अष्टमर्क्ष तृतीय च लग्नादायुरुदाहृतम् ।। द्वितीय सप्तमस्थान मारकस्थानमुच्यते ।।९।। लग्नेशरन्ध्रपत्योश्च लग्नेन्दोर्लग्नहोरयो ।। पूर्वाण्येव प्रयुञ्जीयात्तत्वादादायुषा त्रये ।।१०।। चरे चरस्थिरद्वन्द्वा स्थिरे द्वन्द्वचरस्थिरा ।। द्वन्द्वे स्थिरोभयचरा दीर्घमध्याल्पकायुष ।।११।।

### मारकभेदाध्याय

आयु योग तीन प्रकार के है। नाम–स्वल्पायु, मध्यायु और दीर्घायु। ३२ वर्ष तक स्वल्पायु। ६४ तक मध्यायु। इसके बाद दीर्घायु होती है।। १०० वर्ष तक बाद उत्तमायु कही जाती है। २४ वर्ष की अवस्था तक निश्चित आयु का ज्ञान नही होता।। यदि कष्ट हो तो जप, होम, दान तथा चिकित्सा आदि से बालको के जीवन की रक्षा करनी चाहिए। क्योंकि कुछ बालको की मृत्यु पितृ दोष से और कुछ की मातृबाधा विस्फोटक आदि से।। एव कुछ की बालारिष्ट मे होती है। अल्पायुयोग मे उत्पन्न बालक की 'विपत्' नाम के तारा मे भी मृत्यु होती है।।

मध्यायु योग मे जन्म वाले की भी 'प्रत्यरि' तारा मे मृत्यु सभव है। दीर्घायु योगोत्पन्न शिशु की भी 'बध' तारा मे मृत्यु सभव है।। अल्प, मध्यम, दीर्घ इन तीन भेदो मे प्रत्येक के ३-३ भेद है। यथा-अल्पायु मे अति अल्प, मध्यम अल्प, पूर्णाल्प। इसी प्रकार मध्यायु के तीन भेद है-मध्याल्प, मध्यम पूर्णमध्यमायु। इसी प्रकार पूर्णायु के ३ भेद है। पूर्णाल्प पूर्णमध्यम पूर्णायु। इस प्रकार पूर्वाचार्यों ने आयु के अनेक भेद कहे है।। लग्न से अष्टम तथा तृतीयभाव आयु के स्थान है। और द्वितीय तथा सप्तमभाव मारकस्थान हैं।। लग्नेश-अष्टमेश से तथा लग्न-चन्द्रमा से और लग्न-होरा से आयु का निर्णय होता है। परस्पर विभिन्न योग प्राप्त होने पर अधिक फल से आयु योग स्थिर करना।। चर मे (क्रम से) चर, स्थिर, द्विस्वभाव मे क्रमश दीर्घायु मध्यायु, अल्पायु होती है। स्थिर मे द्विस्वभाव, चर, स्थिर हो तो दीर्घ मध्य अल्प आयु। तथा द्विस्वभाव मे-स्थिर, द्विस्वभाव, चर हो तो दीर्घ, मध्य, अल्प आयु होती है।।१-११।।

अल्पमध्यमपूर्णायु प्रमाणमिह योगजम् ॥ विज्ञाय प्रथम पुसा ततो मारकचिन्तनम् ॥१२॥ वृश्चिके मकरे जन्म नृणा राहुर्मृतिप्रद ॥ ग्रहस्थितावशभेदे शनि स्यान्मारको ध्रुवम् ॥१३॥ महामारकसमौ तौ मान्दिकेतू इति स्मृतौ ॥ जायाकुटुम्बकाधीशौ मारकावष्टमेश्वरौ ॥१४॥ प्रायेण मारका राशिदशास्वत्राविशेषत ॥ षष्ठभे पापभूयिष्ठे षष्ठेशो मुख्यमारक ॥१५॥ षष्ठत्रिकोणगो चापि मुख्यमारक इष्यते ॥ मध्यायुषि मृति षष्ठदशायामष्टमस्य वा ॥१६॥ षष्ठात्त्रिकोणस्य पुनर्दीर्घाल्पविषयो भवेत् ॥ षष्ठे बलयुते तस्य त्रिकोणे मृतिमादिशेत् ॥१७॥ षष्ठेशश्चेद्बलाढ्य स्यात्तत्त्रिकोणे मृति वदेत् ॥ व्यवस्थेय समस्तापि कारकादिदशास्वनु ॥१८॥ चरे चरस्थिरद्वन्द्वा इति यो राशिरागत ॥ स एव मारको राशिर्भवतीति विनिर्णय ॥१९॥ मारकेशदशाकाले मारकस्थस्य पापिन ॥ पाके पाकयुजा पाके समये निधन दिशेत् ॥२०॥ असभवे व्ययाधीशदशाया मरण नृणाम् ॥ अभावेव्ययभावेशसबधिग्रहभुक्तिषु॥२१॥तदभावेऽष्टमेशस्य दशाया निधन पुन॥मध्ये पाप सयुक्तो मारकग्रहयोगत ॥२२॥ तिरस्कृत्य ग्रहान्सर्वाञ्शिहता पापकृच्छुद ॥२३॥ मारकग्रहसबन्धी पापकर्ता शनिस्तदा ॥ तिरस्कृत्य ग्रहान्सर्वाञ्शिहता भवति ध्रुवम् ॥२४॥

पूर्वोक्त प्रकार से अल्प, मध्य, पूर्ण आयु का योग जान कर आगे कहे योगानुसार मारक का विचार करना चाहिए।। वृश्चिक और मकर राशि मे जिनका जन्म होता है, उनका राहु मारक होता है।। ग्रहो मे नवाश भेद हो तो शनि निश्चय ही मारक होता है।। मान्दी और केतु तो महामारक ही है। द्वितीय और सप्तमभाव के स्वामी तथा षष्ठेश,अष्टमेश मारक है।। इस शास्त्र मे प्राय मारकराशि की दशा मे उपर्युक्त ग्रह मारक होते है। षष्ठभाव मे पापग्रह योग अधिक हो तो षष्ठेश ही मुख्य मारक होता है।। षष्ठभाव का त्रिकोण स्थान भी मुख्य मारक होता है। मध्यायु योग वाले की षष्ठ या अष्टमभाव की दशा मे मृत्यु होती है।। छठे भाव से त्रिकोण स्थान दशम और द्वितीय ये दोनो भावदशा क्रमश दीर्घायु और अल्पायु वाले के विषय मे जानना। षष्ठभाव बलीग्रहयुक्त हो तो षष्ठभावकी त्रिकोण राशि मारक होती है।। अर्थात् षष्ठेश यदि बलयुत हो तो उसकी त्रिकोण राशि की दशा मे मृत्यु कहना।। मारक ग्रह

की दशा के भोग के पश्चात् ही मारक विचार की व्यवस्था जानना (क्योंकि मारक का फल यदि प्रथम हो तो कारक का फल किसको प्राप्त होगा)

प्रथम 'चरे चरस्थिरद्वन्द्वा' इस कथन के अनुसार जो मारक राशि प्राप्त हुई है, 'वही मारक राशि है' यह निश्चय है॥ मारकेश ग्रह की महादशा मे मारक स्थान स्थित पापी ग्रह की अन्तर्दशा हो या पापसम्बन्धी ग्रहों का अन्तर हो तो (यदि सम्भव प्रतीत हो तो) मृत्यु होती है॥२०॥ यदि संभव न हो तो व्ययाधीश की दशा मे भी मरण हो सकता है। और व्ययाधीश की बहुत दूर पड़ती हो तो व्ययाधीश से सम्बन्ध रखनेवाले ग्रह के अन्तर मे मरण हो॥ वह भी न प्राप्त हो तो अष्टमेश की दशा मे मरण कहना॥ शनि यदि पापग्रह युक्त हो तथा मारक ग्रह से भी सम्बन्ध रखता हो तो सब मारको को हटाकर आप मारक होता है॥ क्योंकि शनि स्वयं पापकर्मकर्ता है, अत. यदि मारकग्रह से सम्बन्ध हो तो सबको हटाकर निश्चय मारक होता है॥१२–२४॥

एतद्दशांतभुक्त्यादौ विचार्यैव मृतिं वदेत् ॥ षष्ठद्रेष्काणपश्चैवः तथा वै नाशकाधिपः ॥२५॥ विपत्ताराप्रत्यरीशौ वधभेशस्तथैव च ॥ आद्यंतपौ च विज्ञेयौ चंद्रक्रांतग्रहाधिपः ॥२६॥ दशाक्षिप्तेषु कालेषु मारको मरणप्रदः ॥ दुष्टतारापतेः पाके निर्याणं कथितं बुधैः ॥२७॥ चेदंगपो यदि गृहे ह्यरिरेव हीनं पूर्णं सुहृद्यतिसमः सममायुराहुः ॥ वा लग्नपो हितसमारि-पवेऽपि पूर्णं मध्यं च हीनमिहजातकतत्त्वविज्ञाः ॥२८॥ अधुना संप्रवक्ष्यामि मारकाख्यं ग्रहं द्विज ॥ तस्मात्फलप्रभेदेन कथयामि तवाग्रतः ॥२९॥स्वात्मकारकलग्नाच्च चिंतयेद्द्विजसत्तम ॥ भ्रातृषष्ठाष्टमं रिष्फं धनं द्यूनांतरेष्वपि ॥३०॥ सर्वेषां बलवान्खेटो मारको ग्रह उच्यते ॥ सर्वबलसमानत्वे मारकः संज्ञको ग्रहः ॥३१॥ षष्ठाधिपस्तु प्रायेण बहुधा मारकः स्मृतः ॥ तेषां मध्येऽधिकारी च षष्ठेशो मुख्यमारकः ॥३२॥ मारकग्रहाश्रितो राशिर्मारकस्वामिनोऽथवा ॥ ताभ्यां महादशाकाले विंशोत्तर्याः स्थिरादिकः॥३३॥पापे मृत्युर्विजानीयात्त्रिविधांकं द्विजोत्तम ॥ मारका बहवः खेटा यदि वीर्यसमन्विताः ॥३४॥ तत्तद्दशांतरे विप्ररोगकष्टादिसंभवः ॥ षष्ठाधिपदशायां च निधनं भवति ध्रुवम् ॥३५॥ न्यूनातिरिक्तभेदेन बहुखेटास्तु मारकाः ॥ दुर्बलाश्रयराशीशदशा स्वल्पार्तिदा भवेत् ॥३६॥ प्रबलस्य दशायां च महारोगार्तिमृत्युवत् ॥ भयशोकमृताद्भीतिस्तस्करादिभयं भवेत् ॥३७॥ मारकस्य दशायां च महत्या निधनाश्रयो ॥ भूतामंतर्दशामाह तवाग्रे कथयामि भोः॥३८॥मारकग्रहाश्रयीभूतमहापाके विचिंतयेत्॥कारकाच्च विलग्नाद्वा सप्तमाद्वा द्वितीयकम् ॥३९॥ षष्ठाष्टरिः फनायानामपहराष्टके मृतिः ॥ तेषामंतर्दशाधीशास्तेषां मध्ये बलाढ्यकः ॥४०॥

इन मारकेश की दशा का अन्त तक विचार करके मारक की अन्तर्दशा मे मरण कहना चाहिए। षष्ठभाव के द्रेष्काण का स्वामी तथा अष्टमेश, और 'विपद्' नामक तारा और 'प्रत्यरि' तारा के स्वामी एवं 'वध' तारा का स्वामी ये आदि मारक और अन्तिम मारक हैं। और चन्द्रयुक्तग्रह राशिपति ये इतने मारक जानना ॥ मारकदशा से प्राप्त समय मे मारकग्रह मृत्यु देनेवाला है॥ विपद् प्रत्यरि, वध इन तारापति के अन्तर मे भी मरण सम्भव है॥ अङ्गप अर्थात् लग्नेश यदि लग्न मे शत्रु के घर में हो तो हीनायु, मित्र के घर में हो तो दीर्घायु तथा सम के घर मे हो तो मध्यायु होती है॥२८॥ यदि लग्न का स्वामी शत्रु के घर मे हो तो हीन

## ग्रहलक्षणम्

पराशर उवाच–अथात सप्रवक्ष्यामि निधनार्थे विशेपत ॥ प्रकारान्तर्दशायास्तच्च रुद्राद्द्विजसत्तम ॥१॥ लग्नधूनाष्टमे शौचे तयोर्मध्ये च यो बली ॥ प्राणी रुद्र स विज्ञेय सूर्यादिखेचरोऽपि च ॥२॥ तयोर्मध्ये बली चिंत्य शुभदृष्टेन सयुते ॥ दुर्बल सोपि गौणाख्यो रुद्रग्रह इतीर्यते ॥३॥ तत्रैव प्राणिरुद्रस्य विशेष गणयेत्फलम् ॥ प्रवक्ष्यामि तवाग्रे च भृणुष्व त्व महामते ॥४॥ शुभैर्युक्ते शुभैर्दृष्टे शुभसबधकारक ॥ प्राणी रुद्र स विज्ञेयस्तस्याधीनायुरेव च ॥५॥ रुद्रशूलान्तमायु स्यात्त्रिकोणाते तथा पुन ॥ लग्नाते पञ्चमान्ते च नवमाते त्र्यस्थले ॥६॥ चिंतनीय महाप्राज्ञ तत्तद्राशिदशातरे ॥ अल्पमध्य च दीर्घायुर्योगभेदा न सशय ॥७॥ यत्राल्पायु समायोगे त्रिकोणमध्यमान्तरे ॥ आयुस्तत्रैव विज्ञेय तदग्रे च क्रमेण च ॥८॥ योगे मध्यायुष प्राप्ते त्रिकोणे मध्यमातगे ॥ आयुर्दायसमाप्तिश्च निर्विशक द्विजोत्तम ॥९॥ दीर्घायुर्योगसलब्धे त्रिकोणे नवमातगे ॥ दशातरे महाप्राज्ञ आयुर्दायसमाप्तये ॥१०॥ अथैव लग्नधूनादि आरभ्य च दशाक्रम ॥ प्रवृत्तिर्जन्मतो ज्ञेया निर्विशक द्विजोत्तम ॥११॥ यत्ररुद्रग्रहस्यापि शुभदत्व न भाव्यते ॥ तत्र जीवस्य भष्टत्वाच्चेद फलमिति स्थिति ॥१२॥

### रुद्रमहेश्वरबल–ग्रहलक्षण

अब हम मृत्युकाल ज्ञान के लिए विशेष प्रकार से अन्तर्दशा का ज्ञान कहते हैं॥ लग्नेश तथा सप्तमादि ७।८।९ भावेश इन दो भावेशो मे जो ग्रह बलवान् हो वह बली रुद्र (या प्रधान रुद्रसज्ञक ग्रह) ग्रह है। इस रुद्र सज्ञक ग्रह मे सूर्यादि सभी ग्रहो का ग्रहण है॥ (जो ग्रह न्यूनबली है, वह गौण रुद्र है।) इन दोनो रुद्रग्रहो मे बली रुद्र ग्रह का विचार करना चाहिए। वह रुद्रग्रह यदि शुभदृष्टग्रह युक्त हो या शुभग्रहयुक्त हो तो न्यूनबली होने पर भी मुख्य बली रुद्र के समान ही है॥३॥ इस बली रुद्र का फलसम्बन्धी विशेष विचार करना चाहिए सो वह तुमको कहते है॥४॥ वही प्राणी (बलवान्) रुद्र ग्रह शुभग्रहो से युक्त या दृष्ट अथवा अन्य सम्बन्ध हो तो वह पूर्ण बलवान् रुद्र है और उसीके आधीन आयु है॥५॥ जातक की आयु रुद्रशूल तक या उसके त्रिकोण (राशि की दशा) तक है (शूल दशा जो आगे कही जायगी उसी को रुद्रशूल दशा जानना) लग्न तक या पञ्चम अथवा नवम भाव की दशा तक आयु है ऐसा समझना॥६॥ (अब और स्पष्ट करते हैं) अर्थात् हे महाप्राज्ञ मैत्रेय! अल्पायु मध्यायु और दीर्घायु को पूर्व कथित लग्न आदि राशि की दशा से विचार करे॥७॥ जहा अल्पायु योग है वहा त्रिकोण के पञ्चम भाव तक (अर्थात् लग्न पञ्चम के मध्य के भाव तक की राशि से विचारे) उस अल्पायु वाले जातक की आयु वही तक है॥८॥ उससे आगे यदि मध्यायु प्राप्त हो तो पञ्चमभाव से नवमभाव तक विचार करे। क्योंकि–उसकी आयु यही तक है इसमे कोई शका नही है॥९॥ दीर्घायु योग प्राप्त होन पर त्रिकोण नवम भाव से अत तक विचार करना। (अर्थात् जैसे आयु के तीन भाग कल्पना किये वैसे ही कुण्डली मे भी ३ भाग कल्पित हैं। यथा लग्न से चतुर्थ तक अल्पायु विचार पचम से अष्टम तक मध्यायु विचार और नवम से द्वादश तक दीर्घायु का विचार करना चाहिए) अब लग्न से ६ भाव तथा सप्तम आदि ६ भाव इस प्रकार १२ भावो की दशाक्रम स्पष्ट करके जन्म लग्न से विचार आरभ करे॥११॥ जिस

जन्मकुंडली में रुद्रसंज्ञक ग्रह की शुभफलरूपता नहीं मालूम हो वहां तो जातक के जीवहीन होने से यह विचार ही निष्फल है॥१२॥

अथैवरुद्रशूलातमायुर्दायेतिकारणे ॥ योगेस्मिश्च समुत्कर्षोत्किंचिद्दर्शयति द्विज ॥१३॥ प्राणीरुद्रशुभे दृष्टे पूर्वोक्तफलदायक ॥ शुभयोगे न संदेहो रुद्रे शूलातमायुषि ॥१४॥ स्थित एव फल जन्म कथित कारणांतरे ॥ निरुक्ते शुभसंयोगे किं कीर्तयति भो द्विज ॥१५॥ पूर्वमेव फल सादो समुत्कृष्टे तदेव चेत् ॥ सुतरां तदेव वक्तव्य निर्विशंक द्विजोत्तम ॥१६॥ अनेन पूर्वयोगेन फल किंचिद्धि न्यूनता ॥ अद्योतितादुक्तकालात्पूर्वपश्चान्मृतिर्यदि ॥१७॥ निरुक्तयोगश्च तदा ह्यपवाद वदाम्यहम् ॥ रविं विहाय नितरां पापयोगो भवेद्द्विज ॥१८॥ योगोऽयं निष्फलो वाच्य पुरा ब्रह्मप्रणोदितः ॥ इद फल न भवति योगेस्मिन्द्विजसत्तम ॥१९॥ नाशयोगस्य वक्तव्य फल वापि भयंकरम् ॥ अधुना संप्रवक्ष्यामि गौणरुद्रस्य वै द्विज ॥२०॥

रुद्रशूल दशा पर्यन्त जीवन हो एवं जीवनस्थापन में उत्कृष्ट योग दिखाते (कहते ) है॥१३॥ प्राणी रुद्रग्रह–शुभग्रह से दृष्ट होने मात्र से ही जातक का जीवन रुद्रशूलदशा पर्यन्त रहेगा। और प्राणी रुद्र ग्रह यदि शुभग्रह युक्त हो तो जातक के रुद्रशूल दशा के भोग पर्यन्त जीते रहने मे कोई सन्देह ही नही है॥१४॥ जातक का जीवन कारणान्तर से भी स्थित रह सकता है फिर शुभ संयोग रहने पर तो कहना ही क्या है॥१५॥ हे मैत्रेय[1] प्रथम निश्चित, दीर्घ, मध्य आयु आदि फल यदि उत्कृष्टयोग युक्त हो तो निःशंकरूप से वही कहना॥१६॥ पहिले कहे हुए आयु के सहायक योगो म कुछ न्यूनता है। क्योकि– पूर्वयोगानुसार उक्त अर्थात् ज्ञात हुए काल जिसका कि द्योतन (ज्ञापन = ज्ञान) नहीं हुआ उससे पहिले या पीछे यदि मृत्यु संभव हो तो पूर्वोक्त योग सापवाद (निन्दित) होते है। (अथवा पूर्वोक्त योग की निष्फलता मे 'अपवाद' बाधक योग कहते है यह तात्पर्य है) सूर्य के बिना अन्य पापग्रहो से योग हो तो यह योग निष्फल होता है और इसका फल नही होता॥१९॥ और इसके विपरीत दुर्योग का फल भयंकर होता है॥ अब हम मुख्य रुद्रग्रह का फल बताकर गौण रुद्र का फल कहते है॥२०॥

गुणप्रकर्षेण फल विशेषेण तथाप्रत ॥ गौणरुद्रे महाप्राज्ञ मदारेन्दुनिरीक्षिते ॥२१॥ अभावे शुभयोगस्य पापयोगांतरे तथा ॥ फल विप्रेंद्र शूलान्तादायुर्दाय भवत्यपि ॥२२॥ शुभदृष्टे वा शूलातात्परश्चायुर्भवेदपि ॥ योगद्वय परत्वेन योजनीय न संशय ॥२३॥ एतद्योगद्वय किंचिन्न्यूनतायामपि द्विज ॥ नेद फल प्रवक्तव्य मैत्रेयाभाषित पुरा ॥२४॥ शुभदृष्टिभवे चैव योगे च परपूर्ववत् ॥ शुभदृष्टावसत्या च पापयोगाद्यभावत. ॥२५॥ कृत एको हि योगश्च पूर्वयोजनमेव च ॥ अशुभयोगे शुभौ दृष्टौ योगोऽप्यमपरो द्विज ॥२६॥ पापयोगेरभावे च शुभदृष्टौ च संयुते ॥ कैमुतिकाख्यन्यायेन सिद्धो योगस्तृतीयकः ॥२७॥ पुरा प्रोक्तात्व पश्चभुस्तथापरे कथयाम्यहम् ॥ द्वितीययोजनाया तु शुभदृष्टिसमन्विते ॥२८॥ पापयोगस्य चाभावे योगः प्रथम उच्यते ॥ पापयोगे महाप्राज्ञ शुभदृष्टे प्रभावके ॥२९॥

'गौण रुद्रग्रह' गौण होने पर भी योगरूप गुण के बल से विशेष कथन योग्य है। हे मैत्रेय! गौणरुद्रग्रह शनि, मगल, चन्द्रमा से दृष्ट हो और शुभ ग्रह के योग का अभाव हो एव पापग्रहो के मध्य मे हो तो भी वह जातक की आयु शूलदशा तक करता है (अत जातक के लिए तो वही श्रेष्ठ है) और यदि इसके विपरीत शुभयोग हो तो 'शूल'-दशा के बाद भी उसकी आयु हो सकती है। इस उपर्युक्त आयु के साधक, बाधक दोनो प्रकार के योग से आयु का विचार करे।।२३।। (यहा गौणरुद्रग्रह के शुभाशुभ दृष्टि तथा योग के ३ भेद कहते हैं)

१– शुभग्रहकी दृष्टि हो और ग्रहयोग पूर्वोक्तके समान हो। तथा शुभ दृष्टि नही हो और पापग्रह योग भी नही हो। यह एक योगका कथन हुआ, इसमे पूर्व के कहे योग भी युक्त है।

२– अशुभग्रह का योग और शुभ दृष्टि हो यह दूसरा योग है।

३– पापयोग न हो और शुभदृष्टि हो। यह तीसरा योग है। (इसके फल की श्रेष्ठता का तो कहना ही क्या है) इस योग का फल कैमुतिक न्याय से हो सिद्ध है। अर्थात् अतिश्रेष्ठ है।।२७।। पहिले जो शभु ने कहा सो सुनाते है। इस दूसरी योजना मे पापग्रह योगाभाव और शुभदृष्टि युक्त होना यह प्रथम योग है। पापयोग और शुभदृष्टि यह द्वितीय योग है।।२९।।

**द्वितीययोगपक्षेऽह पूर्वस्मिन् द्विजसत्तम ।। पापयोगस्य चाभावे चाशुभदृष्टिविवर्जित' ।।३०।।
कैमुतिकाख्यन्यायेन तृतीयो योग उच्यते ।। अथैव प्राणिरुद्रस्य ह्युक्ता पक्षातरे कथा ।।३१।।
तत्रैव प्रथमे योगे शुभदृष्टिविवर्जिते ।। शुभयोगादियोगश्च द्वितीयोक्तेन योगकृत् ।।३२।।
तृतीयेन द्वयस्यापि योगभग करोत्यपि ।। अधुनोक्तत्रयाभावे मदादिवृष्टिमात्रत ।।३३।। एव
स्थिते सुयोगश्च नि शक प्रतिपद्यते ।। अशुभे खेचरैर्दृष्टे पापयोग इति स्थिति ।।३४।।
शुभयोगविहीने च मन्दारेन्दुनिरीक्षिते ।। तदायु परतो विप्र समानाविति योजयेत् ।।३५।।
प्रथमद्वितीये सत पापयोगैरभावत ।। योगो भगमपेक्षा च तृतीयोक्तमिद भवेत् ।।३६।।
पापदृष्टिमात्रमेव योगनिर्वाहकारणे ।। अपवादविहीनेन इत्येवोक्त तृतीयके ।।३७।। रुद्राभ्या
प्राणिगौणाभ्या ताभ्यामाश्रितमेव च ।। गुणविशेष आयुरत वक्ष्यामीह महामते ।।३८।।**

इस द्वितीय योग मे तो प्रथम योजनावाले योग से समानता है और पापयोग न हो और अशुभदृष्टि भी नही हो तो अतिश्रेष्ठ। अब प्राणी (बली) रुद्र के योग के विषय मे भिन्न विचार है। पूर्व ही कह चुके है कि–प्रथम योग मे शुभदृष्टिरहित हो। और द्वितीययोग मे शुभयोग दृष्टि हो।।३२।। और तीसरे योग मे शुभ दृष्टि और शुभयोग दोनो का अभाव कहा है, तथा योगभग का प्रकार कहा है। अब यह कहते है कि—उक्त तीनो प्रकार के योगो के अभाव मे शनि, राहु की दृष्टिमात्र से ही योग होता है।।३३।। इस केवल एक की दृष्टिमात्र से भी सुयोग होता है। और अनेक पापग्रहो की दृष्टि से तो पापयोग होगा, ऐसा समझना।।३४।। प्राणी रुद्रग्रह शुभदृष्टिहीन हो, चन्द्र, मगल, शनि से दृष्ट हो तो अपने मान से भी परे आयु जाने। यह पहिले कहा हुआ जानना चाहिए।।३५।। प्रथम द्वितीय योग मे शुभयोग हो और पापयोग न हो। और तीसरे योग मे योगभग की अपेक्षा आदि कहा है। तृतीययोग मे एक ग्रह पापग्रह का होने से योग का निर्वाह होता है और अपवाद नही होना चाहिए।।३७।। बली तथा निर्बल, अतएव मुख्य और गौण रुद्रग्रह के योगविशेष के आश्रित हो आयु है, यह अब कहते है।।३८।।

गौणरुद्रेशुभैर्योगे शुभदृष्टिसमन्विते ॥ रुद्रशूलातमायुश्च योजनीय द्विजोत्तम ॥३९॥
पूर्वोक्तप्राणिरुद्रेण द्वियोगप्राणकेन च ॥ द्वाभ्यां शूलातमायुश्च तवाग्रे कथित मया ॥४०॥
अधुना सम्प्रवक्ष्यामि द्वयोर्निर्वाहकारणे ॥ तयो रूप भिन्नभिन्न शृणुष्व मुनिपुंगव ॥४१॥
प्राणिरुद्रे शुभैर्दृष्टे योगोऽय द्विजसत्तम ॥ शुभयोगेति का वार्ता शूलातायुर्विनिश्चितम् ॥४२॥
गौणरुद्रे शुभैर्दृष्टे योगोऽय क्लेशदायक ॥ रोगशोकभय कर्ता मृत्यु नैव करोति च॥४३॥
शुभयोगे महाप्राज्ञ योगोऽय बलवत्तर ॥ तस्य शूलातमायुश्च निर्विशक न सशय ॥४४॥ उभौ
यदौ शुभग्रहैर्योगदृष्टौ द्वयोरपि ॥ शुभयहेण क्लेशश्च रुद्रशूलातमायुषि ॥४५॥ प्राणरे
चाप्राणिरुद्राभ्यां कृतयोगद्वयेन च ॥ तयोर्वा सम्प्रवक्ष्यामि तवाग्रे द्विजसत्तम ॥४६॥
मार्तण्डरहिते चान्य पापयोगकृते द्विज ॥ योगद्वय न भवति पापयुक्त द्वयोरपि ॥४७॥

यदि गौण रुद्रग्रह शुभयुक्त, शुभदृष्ट हो तो रुद्रशूल दशा तक जातक की आयु है। यह समझना चाहिए।।३९।। पूर्वोक्त प्राणीरुद्रग्रह के सम्बन्ध मे प्रथम निश्चित कर दिया है कि–प्रथम कहे हुए दो योगो मे भी आयु शूलदशापर्यन्त जानना।।४०।। अब प्राणिरुद्र मे आयु के निर्वाह के कारण आदि के दो योगो मे कहते है सो अलग २ सुनिये।।४१।। प्राणिरुद्रग्रह शुभदृष्टि युक्त हो, यह एक योग है। इस शुभ योग मे शुभयत यही है कि–जातक की आयु शूल दशा तक निर्बाध है।।४२।। गौण रुद्र यदि केवल शुभदृष्ट हो तो क्लेशदायक होता है रोग शोक, भयमात्र करता है, मृत्यु नही होती।।४३।। हे महाभाग! शुभग्रह का योग हो तो यह योग अतिबली होता है। उस जातक की आयु के शूल दशा तक होने मे कोई सन्देह नही रहता।।४४।। दोनो रुद्रग्रह यदि शुभग्रहो से युक्त हो तो आयु तो शूल पर्यन्त है, परन्तु कष्ट सहित हो।।४५।। हे द्विजश्रेष्ठ! प्राणी रुद्र और गौण रुद्र इन दोनो से प्रभावकारी योग होते है, सो कहते है।।४६।। दोनो ही रुद्रग्रहो से सूर्ययोगरहित अन्य पापग्रहो से योग हो तो ये योग विशेष प्रभावकारी नही होते।।४७।।

शुभयोग शुभर्दृष्टेरुभयेऽपि विना रविम् ॥ पापयोगकृते विप्रभययोगो विनश्यति ॥४८॥
शुभयोग शुभैर्दृष्टिरभावे न भवत्यपि ॥ यत्रायु कथयाचकुर्वक्तव्य द्विजसत्तम ॥४९॥ उभयो
पापयोगे च कष्टिदोषर्दितो भवेत् ॥ क्लेश शोको नृपाद्भीतिर्देशपर्यटन द्विज ॥५०॥
शुभदृष्टेरभावे च शुभयोगविवर्जिते ॥ पापयोगप्रभावेण मरण मारण ध्रुवा ॥५१॥
शुभयोगदृष्ट्यभावे पापयोगे द्विजोत्तम ॥ पुष्टदशाचलेनैव सप्रासादो न सशय ॥५२॥
अस्मिन्प्रकरणे चैवमुपपत्तौ द्विजोत्तम ॥ शुभवर्गो पापवर्गो तवाग्रे कथयाम्यहम् ॥५३॥
अर्कारमदफणिन क्रमात्क्रूरा अयाम्यम् ॥ चन्द्रोपि क्रूर एवात्र क्वचिदत्रफलाप्यपात् ॥५४॥ गुरु
शिखि कविज्ञाश्च यथापूर्व शुभप्रदा ॥ क्रूरखेटा महाप्राज्ञ चार्काद्या उत्तरोत्तरम् ॥५५॥ क्रूरा
क्रूरखेटगाश्च क्रूराणि ह्यफलादकम् ॥ शुभक्षेत्रगते क्रूरे क्रूरता ह्युपशाम्यति ॥५६॥

दोनो ही रुद्रो मे शुभदृष्टि और शुभयोग हो पर सूर्य मे न हो तो पाप (नेष्ट) योग का भय नही रहता।।४८।। शुभग्रह का योग तो हो, पर शुभदृष्टि न हो तो जो दीर्घादि आयु प्राप्त हुई है, वही आयु कहना चाहिए।।४९।। दोनो रुद्रग्रहो से यदि पापयोग हो तो शोक, क्लेश,

राजभय तथा पर्यटन (मुसाफरी) होता है॥५०॥ शुभदृष्टि और शुभयोग न हो तो पापयोग और दृष्टि के प्रभाव से मरण निश्चित है ॥५१॥ शुभयोग और दृष्टि न हो तथा पापयोग दृष्टि हो तो बलवान् शुभदशा रहगी तब तक ही सुख जानना॥५२॥ हे द्विजोत्तम! इस रन्ध्रप्रकरण मे शुभाशुभफल की उत्पत्ति कर्ता जो योग है, उनके सहायक शुभवर्ग और पापवर्ग (वर्ग–समूह) कहते है॥५३॥ प्रथम पापग्रहों का वर्ग (समूह) कहते है। सूर्य, मगल, शनि, राहु, अपने आर्यायानुसार क्रूर है और चन्द्रमा भी मगल के योग से क्रूर है॥५४॥ (शुभवर्ग) गुरु, शुक्र, बुध तथा केतु पूर्वोक्तानुसार शुभ हैं। और पापग्रह जो अभी कहे है वे सूर्य से उत्तरोत्तर बलहीन है॥५५॥ क्रूरग्रह तथा क्रूरराशि मे जो ग्रह हो वे भी क्रूर हैं। किन्तु यही क्रूरग्रह जब शुभराशि तथा भाव मे हो तो इनकी क्रूरता दूर हो जाती है। यह अपवाद है॥५६॥

गुर्वादय शुभग्रहा यथापूर्वं बुध कवि ॥ कथित केतुर्विज्ञेय केतुतो वाक्पतिर्द्विज ॥५७॥ क्रमेणैव विजानीयाच्छुभखेटोत्तरोत्तरम् ॥ यथापूर्वं क्रूरग्रहा क्रूराश्रयसमागते ॥५८॥ एवं क्रौर्यं समायत्र क्रौर्यं तु शोभनाश्रय ॥ एव गुर्वादिसौम्याश्च शुभा श्रेयस्तिशोभना ॥५९॥ क्रूराश्रये सौम्यखेटा सौम्यता नश्यते क्वचित् ॥ एवमेवापरामुक्ति कथयामि द्विजोत्तम ॥६०॥ प्रत्येक शुभराशिस्थ उच्चस्थो वा बुध शुभ ॥ गुरुशुक्रौ च सौम्यस्थौ ततोऽन्ये च शुभा स्मृता ॥६१॥ पूर्वस्मिन्पापयोगेन योगभगद्वये द्विज ॥ निरूपित तथाग्रे च निर्विशक न सशय ॥६२॥ योगद्वयेपि भगार्थे पापदृष्टौ विशेषकम् ॥ न वर्णयति कदापि स्यात्तत्राग्रे कथयामि वै ॥६३॥ शुभग्रहाणा चाभावे मदारेन्दुनिरीक्षिते ॥ पापयोगे शुभैर्दृष्टे परतश्चायुषि द्विज ॥६४॥ प्राणिरुद्रेप्यगौणेन शुभयोगविवर्जिते ॥ पापयोगेऽथवा दृष्टे तथा शुभनिरीक्षिते ॥६५॥

बुध शुक्र, केतु, गुरु ये चार ग्रह भी उत्तरोत्तर बलवान् शुभ है॥५७॥ पूर्वोक्त शुभग्रह उत्तरोत्तर बलवान् है। और क्रूर ग्रह सब यथापूर्व बलवान् है। शुभग्रह भी पापराशि मे हो तो क्रूर है॥५८॥ इस प्रकार क्रूरता जाने यदि सौम्यराशि और शुभभाव मे क्रूरग्रह हो तो शुभ होते है। और गुरु आदि सौम्यग्रह शुभ है तथा शुभाश्रयी हो तो अति शुभ है॥५९॥ सौम्य ग्रह यदि क्रूराश्रयी हो तो कही २ इनकी सौम्यता नष्ट हो जाती है। इसी प्रकार और नियम कहते है॥६०॥ अब प्रत्येक ग्रह के लिए कहते है। बुध शुभराशि मे या उच्च का हो तो शुभ है। तथा गुरु और शुक्र भी सौम्यराशि मे शुभ है। इसी प्रकार अन्य ग्रह भी उच्च या शुभराशि मे शुभ होते है॥६१॥ और पहिले जो हमने पापग्रह के योग मे योगभग के दो योग कह है, उनमे कोई शका नही है॥६२॥ योगभगकारी दो योग मे पापदृष्टि रहते भी जो योगभग का फल नही होता, उसका कारण कहते हैं॥६३॥ शुभग्रहो के योग का अभाव हो चन्द्र, मगल शनि की दृष्टि हो तथा शुभग्रह की भी दृष्टि हो तो प्राप्त आयु अल्प मध्य दीर्घ, योग कुछ और आगे तक जानना॥६४॥ केवल प्राणीरुद्रग्रह शुभयोगरहित हो और पापग्रह का योग अथवा दृष्टि हो एव शुभदृष्टि भी हो॥६५॥

व्यापारतानुविज्ञेया पूर्ववद्द्विजसत्तम ॥ अत्रोपपदपापाच्च राहोरप्युपलक्षणम् ॥६६॥ एव सूर्यातिरिक्तोपि पापयोगस्तथैव च ॥ तस्यै केहानुवादाच्च राहोश्चिद्रुपबृहणात् ॥६७॥

परिग्रहदर्शनाच्च परतो रुद्रपाश्रयात् ॥ शुभस्थाने आयुरंत. शूलत्रयमलघनात् ॥६८॥ न तु शूलदशायां च आयुरंतं द्विजोत्तम ॥ एवं शूले चेतदतशूलरीत्येति यार्धके ॥६९॥ पूर्वोक्तपापयोगेन शुभयोगेन दृष्टितः ॥ कृतयोगद्वयस्यापि भङ्गार्थे च वदाम्यहम् ॥७०॥ शुभयोगेन वै विप्र पापयोगोऽतिदुर्बलः ॥ शुभदृष्टिकृतो योगः पापदृष्टेः कथं क्षम ॥७१॥ न भंजनसमर्थश्च कोटियत्ने कृते द्विज ॥ शुभकृद्योगभगार्थे पापयोगमपेक्षितम् ॥७२॥ शुभयोगे दृष्टिकृते पापयोगेपि भञ्जकः ॥ शुभदृष्टिकृते योग पापयोगो विनश्यति ॥७३॥ यदायुर्वायमध्यस्थ वेदितव्य द्विजोत्तम ॥ पापमात्रस्य शूलत्वे प्रथमर्क्षे मृति वदेत् ॥७४॥ द्वौ रुद्रौ पूर्वं वक्ष्येऽहं यदि चैकत्र संस्थितौ ॥ मिश्रमध्यमशूलर्क्षे शुभमात्रेऽन्तिमे मृतिः ॥७५॥

तो इसका विचार पूर्व कहे अनुसार जानना॥ और पहिले जो उपदेश से फल कहा गया है, उस विचार मे और ग्रहो के समान ही राहु को भी समझना चाहिए॥६६॥ राहु यद्यपि सूर्यातिरिक्त ग्रह है, तथापि अन्य ग्रहो के साथ होकर सूर्य के समान ही योग कारक है और स्व-रूप मे शिरोभाग होने से चिन्यिश्रित (चित् शक्तियुक्त) है। और ग्रहण मे सूर्य का भी आच्छादक है॥६७॥ अत रुद्रग्रह को राशि के स्वामी से यदि सम्बन्ध हो तो अति बलवान होता है। अत राहु शुभस्थान मे हो तो अतरदशा तक आयु जानो क्योकि—राहुयोग होने पर तीनो शूलदशाओ का लघन नही हो सकता॥६८॥ इसी प्रकार राहुयोग होने पर शूलदशा के अन्त तक आयु नही जाती है। शूलदशा मे ही तत्-तत शूलदशा के अन्तर मे ही निधन जानना॥६९॥ पूर्वोक्त जो शुभ तथा पाप दोनो की दृष्टि अथवा योग मे जो 'भगयोग' होता है, इसके लिए अब हम कहते है॥७०॥ हे मैत्रेय ! शुभयोग से पापयोग दुर्बल हो जाता है। क्योकि—शुभदृष्टि की सामर्थ्य भग करने मे पापदृष्टि की क्षमता नही है॥७१॥ शुभदृष्टि के योग को पापदृष्टि यदि कोटि (करोडो) यत्न करे तो भी शुभ दृष्टि का नाश नही कर सकती॥७२॥ शुभयोग और दृष्टि दोनो हो तो शुभदृष्टि से ही पापयोग का नाश हो जाता है॥७३॥ जब मध्यायु योग हो और पापग्रह मात्र का योग हो तो शूलदशा के प्रथम चरण मे ही मृत्यु होती है॥७४॥ और प्रथम जो दो रुद्र गौण मुख्य भेद से कहे है, उनके विषय मे अब यह कहना है कि—वे दोनो यदि एक स्थान मे हो, या मिश्रराशि मे हो तो मध्य या अन्तिम शूलराशि की दशा मे मृत्यु होती है॥७५॥

द्वयोः पापी च प्रथमे शूले मृत्युर्भवत्यपि ॥ यद्येकरुद्रः पापी च द्वितीय. शुभखेचरः ॥७६॥ मध्ये शूले मृतिर्विप्र निर्विशंकं भविष्यति ॥ शुभग्रहद्वय विप्र एकत्र यदि तिष्ठति ॥७७॥ अत शूले मृतिर्ज्ञेया शूलिना भाषित पुरा ॥ एव भेदानुभेदेन विचार्य सर्वत्र बुद्धिमान् ॥७८॥ शूलक्षेत्रे च रुद्रौ द्वौ यदि पापोऽथवा शुभः ॥ मिश्रयहोय वा विप्र चिंतयेद्बलवत्तरः ॥७९॥दीर्घायुरायुर्योगिन भङ्गाभावे द्विजोत्तम ॥ मृत्युशूलदशाया च पापयोग विना रविः ॥८०॥ क्रूराश्रयेषु क्षेत्रेषु शुभनामाश्रयेषु च ॥ निर्याणमितरेषा तु शूलर्क्षे निर्दिशेदयम् ॥८१॥ शुभानामत्र पक्षे तु तथा क्रूराश्रयेषु च ॥ तस्मिञ्जातकशूलर्क्षे मृति ब्रूयान्न संशयः ॥८२॥ यद्यभावो रुद्रयोगे यत्किंचिन्न्यूनता द्विज ॥ तर्हि रुद्राश्रय लक्ष्य त्रिधा न परतोऽपि च ॥८३॥ रुद्राश्रयेपि चायुर्दा समाप्तिर्भवति ध्रुवम् ॥ प्रायेण चिन्तयेद्विप्र पूर्वापरप्रयत्नतः ॥८४॥ यद्गाह्यमाणिरुद्रस्य

रोगे पूर्णे भवत्यपि ॥ रुद्रशूले परत्वेन आयुर्दायसमाप्तये ॥८५॥ रुद्राश्रयेण प्रायेण शूलमेकद्वयत्रयम् ॥ उल्लङ्घनं कृतं विप्र यदि योगविशेषतः ॥८६॥

और दोनो रुद्रग्रह पापी हो तो प्रथम शूलदशा मे मृत्यु होती है। और दो रुद्रो मे एक पापी और एक शुभ हो तो निश्चयरूप से मध्य शूलदशा मे मृत्यु होती है॥७६॥ और दोनो रुद्रग्रह शुभ हो और एक ही स्थान मे हो तो अन्तिम शूलदशा मे मृत्यु जानना ॥७७॥ ऐसे इसके भेद और अनुभेद जानना॥७८॥ शूलदशा के मारक विचार मे दोनो रुद्रग्रहो का योग हो तो देखना चाहिये कि वे दोनो पाप है या शुभ है, अथवा एक पाप एक शुभ है, तो इन दोनो मे बलवान रुद्र को (प्राणी रुद्र) लेना चाहिये॥७९॥ आयुयोग मे दीर्घायु प्राप्त हो और योगभंगकारी योग नही हो, और पापयोग सूर्य के बिना हो तो शूलदशा मे मृत्यु होती है॥८०॥पापग्रह शुभ राशियोमे हो और शुभग्रह पाप राशियोमे हो तो भी शूलराशिवशा मे मृत्यु होती है॥८१॥ पापग्रह पापराशियो मे हो तो भी जातक की मृत्यु शूलदशा मे होती है॥८२॥ यदि गौणरुद्रग्रह के साथ पूर्वोक्त योग हो तो भी रुद्राश्रयफल पूर्वोक्त ही है, उस फल के तीन प्रकार नही होकर एक प्रकार ही है॥८३॥ अत हे मैत्रेय ! रुद्राश्रयी विचार मे पूर्वापर का ध्यान से विचार करके आयु समाप्ति का निर्णय करे॥८४॥ और यदि बाल राशि मे प्राणी रुद्र का पूर्ण योग हो तो शेष को शूल दशा मे आयु समाप्ति (मृत्यु) होती है॥८५॥ हे विप्र ! यदि योग के विशेष बलाबल के विचार से शूल दशा पहिली, दूसरी और तीसरी मे निर्याण (मृत्यु) कहे। और विशेष बलवान् योग मे तीनो का भी उल्लघन हो सकता है॥८६॥

तर्हि रुद्राश्रयेऽप्येव प्रायेणायुर्भवेद् ध्रुवम् ॥ तावद्वर्षेण कथनं जीवनं जातकस्य च ॥८७॥ इत्युक्ते च प्रयाणे च पूर्वे रुद्राश्रयाद्द्विज ॥ आयुर्दायसमाप्तिश्च कष्टयोगादिकारके ॥८८॥ रुद्राश्रमात्तु हीव हि निरुक्ते चायुषि द्विज ॥ भवेद्विशेषरूपं किं तवाग्रे दर्शयामि च ॥८९॥ मेषलग्ने विशेषेण आयूरुद्राश्रयातके ॥ कुष्ठरोगादि कुर्वीत पूर्णायुर्न समाप्यते ॥९०॥ द्वद्वराशौ स्थितौ द्वौ प्राणी गौणद्वयेऽपि वा ॥ रुद्राश्रय तदन्ते वा आयुर्दाय भवत्यपि ॥९१॥ आयुर्दा योगभेदेन प्रथमे मध्यमोत्तमे ॥ दर्शयामि तवाग्रे च कथा शम्भुप्रणोदिताम् ॥९२॥ स्वल्पमध्यमदीर्घायुर्यो गादिकं वदेद्द्विज ॥ तदायुर्दायमल्पादि यथोक्त कथितं मया ॥९३॥ स्वल्पायु प्रथमे शूले मध्यमायुर्द्वितीयके ॥ दीर्घायुश्च तृतीयाते शूलांते निधनं भवेत् ॥९४॥ अधुना सप्रवक्ष्यामि तवाग्रे द्विजनदन ॥ मृत्युर्मुख्यायथीभूतदशाया तद्दशास्वपि ॥९५॥ तत फलविशेषार्थं माहेश्वरग्रहं द्विज ॥ लक्षयति तदाग्रे च तस्मादायुर्विनिश्चितम् ॥९६॥ चिन्तयेत्कारके लग्ने ह्यष्टमेशो महेश्वर ।अथैवाऽन्यप्रकारेण माहेश्वरं वदाम्यहम् ॥९७॥ कारके तुङ्गराशिस्थे सग्रहो बलवत्तर. ॥ रिष्फरध्राधिपौ मध्ये सोऽपि माहेश्वरो ग्रह ॥९८॥ कारकाच्च ग्रहाभावे नाथो माहेश्वरो भवेत् ॥ रिष्फरध्राधिपौ विप्र बले सामान्यता यदि ॥९९॥ द्वय माहेश्वर पातो यथा रुद्रग्रहौ द्वयम् ॥ ताभ्यां च निर्णयार्थाय प्रकारान्च वदाम्यहम् ॥१००॥

इसलिये रुद्राश्रय योग मे भी बल से आयु का निर्णय करे बलाबल के अनुसार जितने वर्ष प्राप्त हो उतनी आयु कहे॥८७॥ इस प्रकार अब हमने रुद्र ग्रह के योग से प्रयाण (मृत्यु) का

विचार किया। और इसके साथ ही कष्ट रोग आदि का विचार किया॥८८॥ इस प्रकार रुद्राश्रय विचार है। इसमे जो विशेष विचार है, वह अब कहते है॥८९॥ मेषलग्न मे विशेष करके रुद्राश्रित राशि के अन्तिम शूल दशा मे मृत्यु होती है और 'पूर्णायु' योग हो भी तो पूरी आयु जीवित नही रहता। और कुष्ठादि रोग भी हो सकता है॥९०॥ प्राणी और गौणरुद्र दोनो ग्रह यदि द्विस्वभाव राशि मे हो तो रुद्राश्रयी शूलदशा मे या उसके अन्त मे मृत्यु होती है॥९१॥ अब महेश्वर के कहे हुए आयुर्दाय सम्बन्धी प्रथम, मध्यम, उत्तम, शूल दशा निर्वाण के योग कहते है॥९२॥ योगानुसार अल्प, मध्य, दीर्घ, आयु का योग निर्देश करो। इसके अल्पादि भेद के योग कह चुके है॥९३॥ स्वल्पायु हो तो प्रथम शूल दशा मे, मध्यायु हो तो द्वितीय और दीर्घायु हो तो तृतीय शूलदशा मे मृत्यु होती है॥९४॥ (अब आगे माहेश्वर ग्रह का निरूपण करते है) हे द्विजनन्दन ! अब आपको माहेश्वरग्रह का विचार कहते हैं, जो कि मृत्यु की आश्रयीभूत मुख्य दशा और अन्तर्दशा विचार मे उपयोगी है॥ उसके पश्चात् उसके लक्षण कहेगे, जिनसे आयु का विचार या निर्णय कहेगे॥९६॥ कारक कुण्डली मे अष्टमाधीश ग्रह महेश्वर सज्ञक होता है॥ अथवा दूसरी रीति से 'माहेश्वर' कहते है॥९७॥ कारक यदि उच्च राशि का हो तो द्वादश तथा अष्टमाधीश मे जो ग्रह अधिक बली हो वह 'महेश्वर' होता है॥९८॥ और कारक से यदि बली ग्रह नही मिले तो, अर्थात् १२।८ भावेश बलहीन या समबली हो तो कारकेश ही 'माहेश्वर' होता है॥९९॥ तथा ८।१२ द्वादशेश के समबली होने पर दोनो की ही माहेश्वर सज्ञा मानकर दो माहेश्वर हो जाते हैं॥१००॥

स्वकारकस्य योगश्चेद्राहुकेतुरवीन्विना ॥ माहेश्वरो भवत्येव विकल्पेन द्विजोत्तम ॥१॥
कारकस्याष्टमे पापग्रहो माहेश्वरो भवेत् ॥ रविचन्द्रौ च चान्द्रिश्च गुरुः शुक्रः शनिस्तमः॥२॥
शिखिना गणनायां च यः षष्ठः कारकग्रहात् ॥ सोऽपि माहेश्वरो ज्ञेयो नवभागसमुच्चयात्
॥३॥ एवं चार्कविभागश्च राशिव्यवहारोज्वता ॥ तदयं तृतीयः खेटो रव्यादीनां महेश्वरः
॥४॥ यद्वा कारकस्यानाच्च षष्ठाधिपतये स्थिते ॥ सोऽपि माहेश्वरो ज्ञेयो निर्विशकं द्विजोत्तम
॥५॥ माहेश्वरग्रहस्यापि ब्रह्मसाहित्यकेन च ॥ ततो ब्रह्मग्रहं वक्ष्ये विशेषेण फलाय वै ॥६॥
लग्नाद्वा सप्तमाद्वापि रिपुरंध्रव्ययाधिपाः ॥ एतेषु बलवान्विप्र मेषादिविषमस्थितेः ॥७॥
लग्नसप्तमयोर्मध्ये राश्योश्च बलवान्भवेत् ॥ उच्चैरपृष्टभागाद्यसंयोगो विद्यमानतः ॥८॥
एतद्गुणत्रयाद् युक्तः सोपि ब्रह्मा ग्रहः स्मृतः ॥ लग्नस्य पृष्ठभाग च षट्कं च द्यूनवादिकम् ॥९॥
सप्तमस्य पृष्ठभागं षट्कलग्नादिकं द्विज ॥ बलवान्विषमस्थोपि ब्रह्मा खेटः स उच्यते ॥११०॥

ऐसी स्थिति मे उनके निर्णय के लिये अन्य प्रकार कहते हैं॥ आत्मकारक का योग, राहु, केतु, सूर्य को छोडकर किसी भी ग्रह से हो तो वह भी माहेश्वर होता है॥१०१॥ (इस प्रकार कितने ही माहेश्वर हो सकते है) इनमे से कुछ की गणना तथा लक्षण कहते हैं। प्रथम–कारक से अष्टमभावस्थित ग्रह माहेश्वर होता है। दूसरा–सूर्य, चन्द्र, बुध, गुरु, शुक्र, शनि, राहु और केतु इस क्रम से आत्मकारक ग्रह से गणना करने पर जो छठा ग्रह है, वह भी माहेश्वर है। यह द्वितीय है॥ और इसी प्रकार नवमाश तथा द्वादशाश मे भी गणना करना। अर्थात् आत्मकारक के नवाश या द्वादशाश से जो छठा हो और बली हो या उच्चादि बलयुक्त हो वह

तीसरा माहेश्वर संज्ञक ग्रह है और सूर्यादि बाकी सभी ग्रहो का स्वामी है।।४।। अथवा कारकस्थान (भाव) से छठे घर के स्वामी की राशि मे हो,वह भी (चौथा) माहेश्वर होता है।।५।। यह माहेश्वर ग्रह बताये गये। अब माहेश्वर के समान होने से 'ब्रह्मा' नामक ग्रह भी बताया जाता है। विशेष करके फलविचार के लिये भी 'ब्रह्मा' ग्रह कथन करते हैं।।६।। (ब्रह्मग्रहलक्षण) लग्न से या सप्तमभाव से ६।८।१२ स्थानो के स्वामियो मे जो बलवान् होता है। वह 'ब्रह्मा' ग्रह है। यह नियम विषम राशि के लग्न के लिये है।।७।। लग्न, सप्तम भाव तथा इनके स्वामी मे जो बलवान् हो और उच्चादि राशि मे स्थित ग्रह से सयोग रहित हो। इन तीन गुणो से युक्त ग्रह भी 'ब्रह्मा' ग्रह है।।८।। लग्न से पीछे की छ राशि, और सप्तम से पीछे की छ राशि (अर्थात् लग्न से छठे भाव तक और सप्तम से १२ भाव तक), इन दोनो भागो मे जो ग्रह विषम राशि मे हो और बलवान् हो वह भी 'ब्रह्मा' होता है।।९।।११०।।

ब्रह्मणा लक्षणाक्रान्ते बलवान्वापि पातयोः ।। शनिराहुरयो केतुर्यदि षष्ठो ग्रहो द्विज ।।११।। स्वाद्विगणनाथा च शन्यादौ तृतीयो ग्रह' ।। स्थानात्षष्ठराशिगे च षष्ठराशधिपोऽथवा ।।१२।। सोऽपि ब्रह्मा ग्रहो ज्ञेयो निर्विशंक द्विजोत्तम ।। बहुना ब्रह्मणाक्रान्ते को ग्रहो ग्राह्यमाणकः ।।१३।। सदेहे निर्णय चात्र तवाग्रे कथयामि च ।। द्वित्र्यादिको ग्रहाणां च योगो ब्रह्मेति लक्षितः ।।१४।। योगःस्वजातियों ग्राह्यः कारक याति यो ग्रहः ।। बहूनामधिको भागः सोऽपि ब्रह्मा ग्रहउच्यते ।।१५।। राहोर्ब्रह्मत्वयोगेन अधिकारी यदा भवेत् ।। विपरीत विजानीयात्सर्वेषु न्यूनभागकम् ।।१६।। इत्येवमपि पूर्वोक्त ब्रह्मणा ग्रहकारकात् ।। रन्ध्राधीशो ष्टमस्थो वा जात्यप्राणैक्यबलान्वित. ।।१७।। द्वौ ब्रह्मा विपरीतार्थे ह्यथवा बहुब्रह्मणा ।। सामान्यभागातरे हि कतमो ग्राह्यमाणकः ।।१८।। सर्वे भागसमानास्तु अग्रहात्सग्रहो बली ।। इति न्यायेन विज्ञेय बलवान् ब्रह्मणोच्यते ।।१९।। ब्रह्मत्वेन प्रधानेन ब्रह्मकार्य करोत्यपि ।। स च ब्रह्मा ग्रहो ग्राह्यः पुरा शम्भुप्रणोदितः ।।१२०।।

तथा ब्रह्मा के लक्षण से युक्त और अनुपात से जो बली हो। शनि, राहु अथवा केतु को भी गणना करके जो छठा हो या छठे का स्वामी हो वह भी 'ब्रह्मा' होता है। अनेक ग्रह 'ब्रह्म लक्षण युक्त हो तो कौनसा ग्रह लेना चाहिये।।११३।। इस सदेह मे निर्णय कहते हैं। २–३ ग्रह ब्रह्म लक्षण से युक्त हो तो जो आत्मकारक समान जातीय हो अथवा सब ब्रह्मलक्षण ग्रहो मे अधिक अशवाला हो।।११५।। राहु के ब्रह्मत्व लक्षण–सम्पन्न होने पर (अनेको मे अशाधिक्य निर्णय स्थल मे, वक्री होने से कम अश ही अधिक जानना) सब ग्रहो (ब्रह्मलक्षणसम्पन्न ग्रहो) से यदि कम अश हो तो राहु भी ब्रह्मा होता है।।११६।। इस प्रकार ग्रहो मे तो आत्मकारक से तथा अष्टमाधीश या अष्टमभावस्थ, अथवा पूर्वोक्त सजातीयता या बलाधिक्य से 'ब्रह्मा' का निर्णय करना।।११७।। दो अथवा अनेक ब्रह्मा प्राप्त हो तो जो अधिक अशवाला हो वह ब्रह्मा।।११८।। और अश भी समान हो तो "अग्रहात् सग्रहो ज्यायान् सग्रहादधिकग्रह ।" इस नियम से 'ब्रह्मा' का निर्णय करना चाहिये।। ब्रह्मस्वरूप होने से प्रधान है और ब्रह्मशक्ति के समान कार्यकारी होने से इस ग्रह को ब्रह्मा कहा गया है।।१२०।।

अधुना सम्प्रवक्ष्यामि ब्रह्ममाहेश्वरौ ग्रहौ ॥ विशेषेण फलं ब्रूयात्तयोर्द्विजनन्दन ॥२१॥
ब्रह्मग्रहाश्रितेशस्य दशादि परिचिन्तयेत ॥ माहेश्वरर्क्षपर्यन्तं जातकस्यायुषि द्विज ॥२२॥
तत्तद्राशित्रिकोणेषु राशिरन्तर्गते मृतिः ॥ चरश्च स्थिरपर्यन्तं दशाया चिंतयेद्द्विज ॥२३॥ तथा
महादशाया च आयुर्दाय विलोकयेत् ॥ विंशोत्तर्यादिकं चैव यथान्यायेषु योजयेत् ॥२४॥
माहेश्वरश्च यो राशिरष्टमेशाश्रयी द्विज ॥ तत्तद्राशित्रिकोणेषु राशावन्तर्गते मृतिः ॥२५॥
अब्दाब्द इति निर्देशात्तत्तद्राशिदशाक्रमः ॥ अब्दो द्वादशधा भागे अन्तरैकैकराशि च ॥२६॥
एकैकाब्दान्तरदशा विज्ञेया गणितागमे ॥ द्वादशाल्पे तथाधिक्ये भागं सूर्येण दापयेत् ॥२७॥
प्राप्तान्तरदशा ज्ञेया न्यूनाधिक्यं न जायते ॥ अब्दाना द्वादशाधिक्ये भानुराश्यन्तरं दशा ॥२८॥
दशाब्दे द्वादश न्यून यस्मिन् राशौ दशा द्विज ॥ भागद्वादशमध्ये च समास तदनन्तरम् ॥२९॥
महादशाक्रमेणैव चालनीयेति भाषितम् ॥ अर्कभागेतरदशानयन द्विजसत्तम ॥१३०॥

इति श्रीबृहत्पाराशरहोराशास्त्रेपूर्वखण्डे रुद्रमाहेश्वरब्रह्मग्रहलक्षणकथन
नाम द्वाविंशोऽध्यायः ॥२२॥

हे द्विजनन्दन ! हमने ये 'ब्रह्मा' और 'महेश्वर' नामक ग्रह कहे। अब इनका फल कहते हैं॥१२१॥ ब्रह्म ग्रह जिस राशि मे हो उसके स्वामी की दशा का विचार करे। माहेश्वर राशि की दशा तक जातक का जीवन जानना ॥१२२॥ राशिदशा मे तत्तत् राशि के त्रिकोण राशि की अन्तर्दशा मे मृत्यु कहना। चरराशि का जन्म हो तो स्थिर राशि तक जीवन है॥१२३॥ ग्रहदशाओ मे, महादशा मे आयु के विचार करने के लिये विंशोत्तरी आदि दशाओ में विचार करना चाहिये॥१२४॥ अष्टमेशस्थित राशि की दशा मे–माहेश्वर के अन्तर मे या उससे त्रिकोण राशि दशा के अन्तर मे 'मृत्यु' कहना॥१२५॥ इस ब्रह्मा का वर्ष देखने के लिये "अब्दाब्द०" इस वचन के अनुसार जो राशि दशा है, उसमे १२ का भाग देने से अर्थात् बारह भाग करने से १–१ भाग की १–१ राशि जानना ॥१२६॥ और एक एक राशि का १–१ वर्ष जानना। इस प्रकार १–१ वर्ष की अन्तरदशा प्राप्त होगी। १२ से अधिक या कम होने पर १२ का भाग देना॥१२७॥ जो वर्ष प्राप्त हो उसमे मृत्यु जानना, उसमे न्यूनाधिक्य नहीं होता। यदि वर्ष १२ से अधिक हो तो सूर्य राशि के अन्तर मे मृत्यु कहना॥१२८॥ अथवा दशावर्षों मे १२ कम कर देना। जो शेष रहे उस राशि की दशा जानो। १२ भाग के भीतर ही दशा होती है॥१२९॥ महादशा के क्रम से ही आगे भी विचार करना॥ और १२ भाग के अनुसार अन्तरदशा का विचार करना। (सम्भवतः यहा ग्रन्थ का कुछ भाग छूट गया है) ॥१–१३०॥ ग्रहलक्षण समाप्त ॥

इति श्रीबृहत्पाराशर हो० शा० पूर्वखण्डे भावप्रकाशिकाया रुद्र, माहेश्वर,
ब्रह्मग्रहलक्षण नाम द्वाविंशोऽध्यायः ॥२२॥

—

# अथ पित्रादिनिर्याणमाह

अधुना सम्प्रवक्ष्यामि पित्रादेश्च द्विजोत्तम ॥ योगं निर्याणकं स्यात तथा शम्भुप्रणोदितम् ॥१॥
लग्नसप्तमयोर्मध्ये यो राशिर्बलवान्द्विज ॥ तस्य राशे समारम्य क्रमेण पूर्ववद्द्विज ॥२॥
प्रवर्तकदशारीत्या रुद्रशूलदशांतरे ॥ भविष्यति पितुर्मृत्युर्निर्विशंकद्विजोत्तम ॥३॥

## पित्रादिनिर्याण

हे द्विजोत्तम! अब हम पित्रादिनिर्याण सुने अनुसार कहते है॥१॥ लग्न तथा सप्तम से जो राशि बलवान् हो, उस राशि से विचार करके पितृ स्थान दशम के प्रवर्तक ग्रह से रुद्रशूल दशा मे पितृमृत्यु होती है॥२॥३॥

अथमातुर्निर्याणम्—लग्नाद्वा सप्तमाद्वाऽपि बली राशि चतुर्थक ॥ तस्याः शूलदशायां च मातुर्मृत्युर्न संशय ॥४॥
मातृनिर्याण—लग्न या सप्तमभाव मे जो इन भावो की बलवान् राशि हो उससे चतुर्थ भाव की रुद्रशूल दशा मे माता की मृत्यु होती है॥४॥

भ्रातृनिर्याणम्—लग्नाद्वा सप्तमाद्वापि बली वीक्षेत्तृतीयकम् ॥ तस्याः शूलदशायां च भ्रातृनिर्याणमेव च ॥५॥
भ्रातृ निर्याण—लग्न से या सप्तम से देखना इनमे जो बली हो और तीसरे भाव को देखता हो। उसकी शूल दशा मे छोटे भ्राता का निर्याण होता है॥५॥

भगिनीभगिनीपुत्रनिर्याणमाह—लग्नाद्वा सप्तमाद्वापि राशिपंचमके बली ॥ तस्याःशूलदशायां च भगिनीपुत्रयोर्मृति ॥६॥
भगिनी तथा भागिनेय निर्याण—लग्न से या सप्तम से पंचमभाव मे से जो बलवान् हो उसकी शूलदशा मे भगिनी तथा भागिनेय की मृत्यु होती है॥६॥

ज्येष्ठभ्रातुर्निर्याणम्—लग्नाद्वा सप्तमाद्वापि एकादशे बली द्विज ॥ तस्याः शूलदशायां च निर्याणं ह्यग्रजस्य च ॥७॥ लग्नाद्वा सप्तमाद्वापि नवराशिर्बली द्विज ॥ निर्विशङ्कं भवेत्तस्य शम्भुना कथितं पुरा ॥८॥
ज्येष्ठभ्रातृनिर्याण—लग्न से या सप्तम से एकादश स्थान मे जो बलवान् हो उसकी शूलदशा मे ज्येष्ठ भ्राता का निर्याण होता है॥७॥ लग्न से या सप्तम से नवमभाव मे जो बली हो उसकी शूलदशा मे ज्येष्ठभ्राता की मृत्यु होती है॥८॥

मातापित्रो कारकाभ्यां चिंतयेत्पूर्ववद्द्विज ॥ तदायुर्निधनं चापि दीर्घादीना प्रभेदत ॥९॥
मातृमार्गवयोर्मध्ये सद्वीर्योऽधिकयतो द्विज ॥ ग्रहादित्यादिरीत्या च स खेट पितृकारक ॥१०॥
चन्द्रमंगलयोर्मध्ये तथैव रविशुक्रयो ॥ बलेन रहित सोऽपि पापग्रहनिरीक्षित ॥११॥

पित्रादिकाना भवते यथाक्रम द्विजोत्तम ॥ उभयोर्बलसाम्ये च उभौ पित्रादिकारकौ॥१२॥
द्विविध चितयेत्तत्र प्राण्यप्राणिविभेदत: ॥ पित्रादिकारकस्यैव प्राणिफल वदाम्यहम् ॥१३॥
पित्रादिकारके विप्र शुभग्रहनिरीक्षिते॥ मातृकारकाश्रयीभूतराशिरेतत्त्रिकोणगे॥१४॥ दशाया
निधन वाच्य मातापित्रोरय क्रमम् ॥ इति प्राणिकारकस्य तवाग्रे कथित फलम् ॥१५॥
अप्राणिकारकस्यैवमष्टमेशो बलान्वित: ॥ तस्याश्रयीभूतराशित्रिकोणे निधन भवेत् ॥१६॥

मातृकारक से माता की, पितृकारक से पिता की योगानुसार प्रथम दीर्घ मध्य अल्प आयु का विचार करके पूर्वोक्त चतुर्थ और दशम भाव से इनकी आयु तथा मृत्यु का विचार करें॥९॥ सूर्य और शुक्र मे से जो बली हो और अंशो मे अधिक हो वह पितृकारक है॥१०॥ मगल और चन्द्रमामे से तथा सूर्य शुक्रमे से जो बलवान् न हो,पापग्रहदृष्ट हो वह भी पितृ, मातृकारक होता है॥११॥ और दोनो का समान बल हो तो दोनो ही कारक होते है ॥१२॥ और इससे प्राणी अप्राणी भेद से दोनो विचार करे। इन पित्रादि कारक का फल कहते है॥१३॥ पित्रादि कारक के शुभग्रहदृष्ट होने स मातृकारक की आश्रयी राशि तथा उसकी त्रिकोण राशि की दशा मे माता पिता भ्राता की मृत्यु कहना। इस प्रकार बलवान् कारक का फल कहा गया॥१५॥ तथा निर्बल कारक का अष्टमेश यदि बली हो तो तद् स्थित राशि के त्रिकोण मे निधन होता है॥१६॥

यदा रध्रेश वीर्याढ्यप तच्छूले निधन द्विज ॥ पितृमातृकारके च शूले निधनमेव च ॥१७॥ यद्वा प्राणिकारकस्य ह्येव च्छ्लांतरेपि च ॥ फल वै निर्दिशेद्विप्र पर तद्भावनायके ॥ अप्राणिकारकफल निर्दिशेद्वयमे द्विज ॥१८॥ सर्वान् प्रकारानित्येव चितयेद्रुद्रशूलवत् ॥१९॥ अल्पाद्यायुर्योगके चेदायुर्दानियन द्विज ॥ दशाराधारभेदेन ह्यायुर्दाय च पूर्ववत् ॥२०॥ राश्यादौ निर्णय चादौ तद्विशेषफलाय वै ॥ तन्वादिव्ययभावेषु भाव तत्तत्समुच्चितम् ॥२१॥ तत्तत्कारकमाश्रित्य राश्यारूढ विचिंतयेत् ॥द्वारबाह्यादिक सर्वं राश्याद्य द्विजसत्तम ॥२२॥ अधुना सप्रवक्ष्यामि पितुर्निधनहेतवे ॥ विशेषक दर्शयति पुनरुक्त च वै द्विज ॥२३॥ रविर्सोय: क्रियायोगे तप्राविकर्षणे स्थितौ ॥ बुधसूर्याश्रयीभूततत्प्रमेये दशान्तरे ॥२४॥

और यदि अष्टमेश बली हो तो उसकी शूलदशा मे निधन होता है॥ अथवा पितृ मातृ कारक की दशा मे (शूलदशा मे) निधन होता है॥१७॥ अथवा बलवान् कारक की शूलदशा मे मृत्यु होती है॥१८॥ इसी रीति से रुद्र ग्रह के समान पूर्वोक्त सभी प्रकारो स इसम भी विचार करना चाहिए॥१९॥ अल्प मध्यादि आयु के विचार मे भी पूर्व के समान आयुयोग स आयु निश्चय करना। पश्चात् दशा की कथितरीति से दशा देखना॥२०॥ तत्तत् भावो के विचार करने के लिए राशि आदि का निर्णय उनके स्वामी आदि का विचार जैसा प्रथम कहा है उनका विषयविशेष का विचार करना, इसी प्रकार १२ भावो का विचार करना॥२१॥ तथा कारक विचार एव आरूढ लग्न विचार तथा द्वार, बाह्य राशि विचार आदि पूर्ववत् इसमे भी करना॥२२॥ अब पिता की मृत्यु का ज्ञान प्राप्त करने के लिए कुछ विशेष विचार कहते है॥२३॥ इस कार्य का कर्ता सूर्य है वह सूर्य ... त्रिकोण स्थान मे स्थित हो (यह

विचार मेष लग्न मे करना) तो बुध या सूर्य स्थित राशि की दशा मे मृत्यु होती है॥२४॥

**लग्नभूतस्य मेषस्य सिंहस्यापि दशान्तरे ॥ वक्तव्यं पितृनिधनं निर्विशंकं द्विजोत्तम ॥२५॥ यदि लग्ने पापखेटा मेषराशौ रविस्तथा ॥ योगे मेषमहापाके वाप्यामन्तर्गते मृतिः ॥२६॥ अधुना सम्प्रवक्ष्यामि तवाग्रे द्विजनंदन ॥ बाल्ये च पित्रोर्मरणं मयोक्तं च विशेषतः ॥२७॥ पित्रोः कारकयोर्विप्र प्राण्यप्राणिहीनोऽपि वा ॥ व्यर्कति पापयोगे च शुभयोगविवर्जिते ॥२८॥ दशाब्दात्स्यूनमित्येव पित्रोर्मृत्युर्यथा क्रमम् ॥ रविदृष्ट्याशुभ दृष्टौ नाय योगो द्विजोत्तम ॥२९॥ रव्यारूढविलग्नेऽस्मिन्पित्रोर्भावं विचारयेत् ॥ तद्दशायां फलं वाच्यं पित्रोर्दुःख सुखादिकम् ॥३०॥**

तथा लग्न मेष मे लग्न की राशि मेष की सिंह की दशा म पिता की मृत्यु कहनी चाहिए॥२५॥ यदि लग्न मे पापग्रह और मेषराशि म सूर्य हो इस योग मे मेषराशि की महादशा मे और के द्रराशि के अन्तर मे पिता की मृत्यु कहना॥२६॥ अब हम बाल्यावस्था म जिन योगो से पितृमरण होता है वे योग कहते है॥ मातृकारक तथा पितृकारक का निर्णय करके प्राणीरुद्र तथा अप्राणी-रुद्र का निर्णय करे और योगो का विचार करे यदि सूर्यरहित पापग्रहो का योग हो और शुभग्रहो से योग नही हो॥ प्रथम शून दशा म ही माता तथा पिता की मृत्यु जानना॥२८॥ सूर्य दृष्टि युक्त अशुभ दृष्टि हो तो यह योग नही समझना ॥२९॥ इसी प्रकार सूर्य के आरूढ लग्न मे भी माता पिता की मृत्यु का विचार करे॥ और आरूढ लग्न की दशा तथा आरूढ लग्न म तत्तत भावो म माता पिता के सुख दुःख आदि का भी विचार करे॥३०॥

**अथ कलत्रनिधनमाह-कलत्रकारके खेटस्तदा स्त्रीराशिचिंतनम् ॥ तत्त्रिकोणदशायां च कलत्रनिधनं भवेत् ॥३१॥**

**भार्यानिधन विचार**-प्रथम भार्याकारक ग्रह का निर्णय करे। पश्चात् उसमे सप्तमभाव का विचार करे। उस सप्तमभाव या सप्तमभाव से त्रिकोण राशि की दशा म मृत्यु का विचार करना॥३१॥

**अमात्यनिधनमाह-तत्तत्कारकाश्रये च त्रिकोणर्क्षदशान्तरे ॥ तेषां च मातुलादीनां निधनं भवति ध्रुवम् ॥३२॥ एवं भ्रातृकलत्रादितद्दशारूढपत्रके ॥ चिंतयेदायुः सामर्थ्यं सर्वं फलसमानकम् ॥३३॥ भ्रात्राद्यं कारकाद्वापि तृतीये पापखेचरे ॥ युते दृष्टेऽथवा विप्र दुष्ट मरणमुच्यते॥३४॥ तत्तत्कारकतदीशात्तृतीये पापयोगकृत्।तेषां तेषां प्रयत्तव्यं दुष्ट मरणमेव च॥३५॥ तत्तद्भावात्कारकेशात्तृतीये शुभदृष्टियुक्।तेषां तेषां शुभैर्योगैर्मरणं भवति द्विज॥३६॥ शुभाशुभद्वये योगे दृष्टौ नापि तृतीयगे ॥ शुभाशुभात्मकं विप्र मरणं भवति ध्रुवम् ॥३७॥**

मातुल आदि की मृत्यु का विचार-जिसके निधन का विचार करना हो उसके कारक का

राशि अथवा त्रिकोण राशि की दशा या अन्तरमे उनके निधन का निर्देश करे॥३२॥ इसी प्रकार भार्या आदि के भाव से तथा उन भावो के आरूढ लग्न से प्रथम आयु अल्पादि का निर्णय करे। पश्चात् फलाफल तथा निधन का विचार करे॥ लग्न से या कारक (आत्मकारक) से तीसरे भाव मे पापग्रह हो तो कष्ट मे मृत्यु होती है॥३४॥ उस २ सम्बन्धी कारक से या कारकेश से तृतीयभाव मे यदि पापयोग हो तो उन २ सम्बन्धी का कष्टकारी निधन कहे॥३५॥ तथा यदि उस भाव के कारकेश से तृतीय भाव पर यदि शुभदृष्टि हो तो उन २ सम्बन्धियो का मरण शुभयोग से होता है॥३६॥ यदि शुभ या अशुभ कोई भी दृष्टि नही हो तो साधारण रूप से मृत्यु जाने॥३७॥

## अथ मरणनिमित्तान्याह

तृतीये भानुना दृष्टे तथा युक्ते बलाढ्यके ॥ राजहेतोश्च मरणं निर्विशङ्क द्विजोत्तम ॥३८॥ तृतीयचन्द्रेण युते षष्ठे वा पश्यतो मृतिः ॥ तृतीयशनिराहुभ्यां दृष्टे वापि युतेथ वा ॥३९॥ विषार्तिमरणं वाच्यं जलाद्वा वह्निपीडनात् ॥ गर्ताद्युच्चात्प्रपतनं बन्धनाद् वा मृतिर्भवेत् ॥४०॥ तृतीये चन्द्रमान्दी च षष्ठे वापि युते द्विज॥ कृमिकुष्ठादिना सत्यमरणं च विनिर्दिशेत्॥४१॥ तृतीये गुरुणा दृष्टे युक्ते शोकाद्विना मृतिः ॥ तृतीये भृगुपुत्रदृष्टे मेहरोगेण वै मृतिः ॥४२॥ बहुयुक्ते तृतीये च बहुरोगयुता मृतिः ॥ तृतीयके तु सत्खेटयोगे दृष्टियुतेथ वा ॥४३॥ तथैव चन्द्रयोगे च तत्तद्रोगेण वै मृतिः ॥ अनेक योगभावेन तस्य मृत्युः सुनिश्चितः ॥४४॥

### मरण निमित्त

तृतीयभाव यदि बलवान् सूर्य से दृष्ट हो तो मृत्यु मे कारण राजसम्बन्धी होता है॥३८॥ इसी प्रकार तीसराभाव चन्द्रमा से युत या दृष्ट अथवा षष्ठभाव मे चन्द्रमा हो तो राजनिमित्त ही मृत्यु जानना॥३९॥ तृतीयभाव शनि राहु से युक्त अथवा दृष्ट हो तो विष से या अग्नि, जल से मृत्यु होती है॥ अथवा ऊंचे स गिरकर या गढे मे गिरकर या फासी से मृत्यु होती है॥४०॥ तृतीय भाव मे चन्द्रमा तथा मान्दी हो अथवा षष्ठभाव मे हो तो गलितकुष्ठ आदि या व्याघ्र आदि से मृत्यु हो॥४१॥ तृतीयभाव गुरु स युक्त अथवा दृष्ट हो तो चिन्ता आदि से तथा शुक्रयुक्त हो तो प्रमह रोग स मृत्यु होती है॥४२॥ यदि अनेक ग्रह युक्त दृष्ट हो तो अनेक रोगो स मृत्यु होती है॥४३॥तृतीय भाव सौम्यग्रहोसे युक्त दृष्ट हो अथवा चन्द्रमा से युत दृष्ट हो तो उक्त तत् २ रोगो से मृत्यु होती है॥४४॥

## अथ निधनदेशभेदमाह

तृतीये शुभयोगेन शुभदेशे मृतिर्भवेत् ॥ पापेन कीकटे देशे मिश्रे मिश्रस्थले मृतिः ॥४५॥ तृतीये गुरुशुक्राभ्यां योगे ज्ञानेन वै मृतिः ॥ गुरुशुक्रातिरिक्तान्ययोगे शिथिलता मृतौ ॥४६॥ मिश्रे मिश्रा मृतिरिति एव कर्माणि विप्र भो ॥ कर्मभावे विशेषेण फलदाता द्विजोत्तम ॥४७॥ लग्नद्वादशमध्ये च शन्यादित्रितयं यदि ॥ स्थित पित्रोर्न संस्कारं कुर्वीत निजहस्ततः ॥४८॥ लग्नादीनां च भावानां पूर्वार्द्धे द्वादशादिकम् ॥ परार्द्धे स्थितमन्यादि बोधितेपि न संशय ॥४९॥

लग्नादि यस्य मध्ये तु शुभग्रहनिरीक्षितम् ॥ नामयोगं विजानीयात्पुरा शंभुप्रणोदितम् ॥५०॥

इति श्रीबृहत्पाराशरहोराशास्त्रेपूर्वखंडे निधनकथन नाम त्रयोविंशतितमोऽध्यायः ॥२३॥

### निधन देशभेद

तृतीयभाव शुभग्रह युक्त हो तो शुभदेश मे मृत्यु होती है। पापग्रह युक्त हो तो दुष्ट देश मे। तथा दोनो प्रकार के ग्रह हो तो मिश्र देश (अच्छे बुरे मिश्रित देश) मे मृत्यु होती है॥४५॥ तृतीयभाव मे गुरु या शुक्र का योग हो तो ज्ञानावस्था मे, इनसे अन्य शुभग्रह योग हो तो शरीर धीरे २ क्षीण होकर मृत्यु होती है॥४६॥ तथा तृतीयभाव मे शुभपाप मिश्र योग हो तो मिश्रितभाव से। हे विप्र! इस प्रकार कर्मानुसार मृत्यु होती है॥ कर्म के ही फलदाता से सूर्यादि ग्रह है॥४७॥ लग्न से बारहवे स्थान मे यदि शनि, राहु, केतु हो तो जातक को अपने माता पिता का कर्मकाण्ड करने का सुयोग नही प्राप्त होता॥४८॥ लग्नादि बारह भावो मे पूर्वार्द्ध और पराद्धं की छः२ राशियां है। पूर्वार्द्ध मे शन्यादि का दृष्टियोग हो तो पूर्वोक्त फल होता है। परार्द्ध मे अन्य दृष्टियोग हो तो पूर्वार्द्ध वा शन्यादि योग व्यर्थ होता है॥४९॥ लग्न आदि भावो मे शुभग्रह की दृष्टि जिस भाव पर हो उसका नाम मृत्यु के बाद प्रसिद्ध होता है॥५०॥

इति श्री० बृ० पा० हो० शा० पू०ख०सा० निधनयोगकथन नाम त्रयोविशतितमोऽध्याय ॥२३॥

## अथ राजयोगाध्यायः

पराशर उवाच—अथातः संप्रवक्ष्यामि राजयोगादिकं परम् ॥ ग्रहाणां स्थानभेदेन राशिदृष्टिव-शात्फलम्॥१॥ तपः स्थानाधिपो मन्त्री मन्त्राधीशो विशेषत ॥ उभावन्योन्यसदृष्टौ जातश्चेदिह राज्यभाक् ॥२॥ यत्र कुत्रापि सयुक्तौ तौ वापि समसप्तमौ ॥ राजवंशोद्भवो बालो राजा भवति निश्चितम् ॥३॥ वाहनेशस्तथा माने मानेशो वाहने स्थितः ॥ बुद्धिधर्माधिपाभ्यां तु दृष्टश्चेदिह राज्यभाक् ॥४॥

### राजयोगाध्याय

अब श्रेष्ठ राजयोग आदि कहते हैं। उन योगो मे ग्रहो के स्थान भेद से राशि और दृष्टि द्वारा फल कहा जायगा॥१॥ सूर्यादिग्रहो मे स्थान बल से एकादश स्थान का स्वामी मन्त्री होता है। और विशेष करके मन्त्राधीश (पञ्चमाधीश) मन्त्री पद मे कहा जाता है। ये दोनो परस्पर दृष्टियुक्त हो तो जातक राजा होता है॥२॥ वे दोनो किसी भी श्रेष्ठस्थान मे एक साथ हो, अथवा आपस मे सप्तमस्थान मे हो तो जातक (राजवंशी हो तो) निश्चय राजा होता है॥३॥ चतुर्थस्थान का स्वामी दशमभाव मे, और दशमेश चतुर्थभाव मे हो तथा पञ्चम नवम के स्वामी से दृष्ट हो तो राज्यभोगी होता है॥४॥

सुतेशकर्मेशसुखेशलग्ननाथा यदा धर्मपसयुताश्चेत् ॥ नृपोन्तरश्चेदिह वारणाढ्यः स्वतेजसा

व्याप्तदिगंतरालः ॥५॥ सुखकर्माधिपौ चैव मंत्रिनाथेन संयुतौ ॥ धर्मेशेनाथ वा युक्तौ जातश्चेदिह राज्यभाक् ॥६॥ सुतेश्वरौ धर्मपसंयुतश्चेल्लग्नेश्वरेणापि युतो विलग्ने ॥ सुखेऽथ मानगृहेऽथ वा स्वाद्राज्याभिषिक्तो यदि राजवंश्यः ॥७॥ धर्मस्थाने गुरुक्षेत्रे स्वगृहे भृगुसंयुते ॥ पञ्चमाधिपसंयुक्ते जातश्चेदिहराज्यभाक् ॥८॥ निशार्द्धाच्च दिनार्द्धाच्च परं सार्द्धद्वि नाडिका ॥ शुभा तदुद्भवो राजा धनी वा तत्समोऽपि वा ॥९॥ चंद्रः कविं कविश्चन्द्रं पश्यत्यपि तृतीयगः ॥ शुक्राच्चंद्रे ततः शुक्रे तृतीये वाहनार्थवान् ॥१०॥

पञ्चमेश, दशमेश, तृतीयेश और लग्नेश ये सब यदि नवमेश से युक्त हो तो जातक यदि राज्यवश मे हो तो तेजस्वी, यशस्वी तथा हाथी आदि युक्त राजा होता है॥५॥ सुख (४) कर्म (१०) के स्वामी यदि पञ्चमेश से युक्त हो अथवा नवमेश से युक्त हो तो जातक राज्यभोगी होता है॥६॥ पञ्चमेश यदि लग्नेश और नवमेश से युक्त हो और लग्न मे स्थित हो या चतुर्थ अथवा दशम मे हो तो राजा होता है॥७॥ नवमभाव मे गुरु की राशि हो और गुरु स्वगृही तथा शुक्रयुक्त हो एवं पञ्चमेश से युक्त हो तो राजा होता है॥८॥ दिनार्द्ध और रात्र्यर्द्ध से २॥ घड़ी (१ घण्टा) के भीतर जिसका जन्म हो वह राजा या धनी होता है॥९॥ तृतीयभाव मे स्थित चन्द्रमा या शुक्र परस्पर देखते हो। अथवा शुक्र से चन्द्रमा तीसरे या चन्द्रमास से शुक्र तीसरे हो तो जातक धन वाहन युक्त होता है॥१०॥

## अथ द्वादशयोगमाह

लग्नवित्तौ स्वदुश्चिक्यौ पितुर्यौ तुर्यपंचमौ ॥ द्विषात्मजौ षष्ठमारौ स्त्रीरंध्रौ धृतिमाप्यकौ ॥११॥ धर्मकर्मौ खलाभौ च रिष्फलाभौ तनुव्ययौ ॥ पुष्पकला नामयोगाद्य राजसूत्य चलूपकम् ॥१२॥ आमालयं दारुणं कर्म राजयोग प्रियामृतिम् ॥ मत्स्यव्ययं राजयोग भूमिद्रव्यमृणव्ययम् ॥१३॥ वित्तहानिर्द्वादशैते योगा वै सर्वदा स्मृताः ॥१४॥

## अथ चतुर्विधसंबंधमाह

प्रथमः स्थानसंबंधो दृष्टिजस्तु द्वितीयकः ॥ तृतीयस्त्वेकतो दृष्टिः स्थित्यैकत्र चतुर्थकः ॥१५॥ अन्योन्यगौ तथा स्वे स्वे संयुतावन्यमे स्थितौ पूर्वेक्षितो मिथो वापि चैकवर्गगतौ यदा ॥१६॥

## अथाग्रे राजाऽमात्ययोगादिबाधकमाह

तदा योगी भवेत्तत्र विबलो नैव योऽसकृत् ॥ शत्रुयुक्तेक्षितो पापवीक्षितो नैव योगकृत् ॥ व्ययमृत्युपदास्यावयवा समसंयुतौ ॥१७॥ यदाऽधीशौ तदाप्यत्र भवतो नैव योगदौ ॥ राजामात्यादियोगानां वक्रगौ नाशकारकौ ॥१८॥

**द्वादश योग**

१२ योग–अंको मे लिखे हुए भावो के स्वामी का परस्पर स्थान या दृष्टि सम्बन्ध होने से पुष्कल नाम के १२ योग होते है। १।२–२।३–३।४–४।५–५।६–६।७–७।८–८।९–९।१०–

१०।११–११।१२–१२।१ क्रम से इनका फल यह है–
लाभयोग, राजा की नौकरी, फौज मे बडा पद, राजा का मत्री या मत्री तुल्य, कठिन कर्म करनेवाला, राजा या धनी,स्त्री की मृत्यु धनहीन राजयोग, भूमि और द्रव्य, खर्चा और कर्जा और धन हानि ॥ ये १२ योग है॥११॥१२॥१३॥१४॥

ग्रहो के चार प्रकार के सम्बन्ध

(१) स्थान सम्बन्ध (२) दृष्टि सम्बन्ध (३) एकत्र दृष्टि सम्बन्ध (४) एकत्र स्थिति सम्बन्ध ॥ इनमे विशेष स्थान-सम्बन्ध मे परस्पर एक दूसरे के स्थान मे होना अथवा अपनी राशियो मे किसी राशि का दोनो मे होना अथवा मित्र की राशि मे एक साथ दोनो का होना अथवा नवमांश आदिक वर्ग मे एक वर्ग मे होना। इसी प्रकार दृष्टि सम्बन्ध के भी भेद जानना ॥१५॥१६॥

राजा मन्त्री योग के बाधक योग–जहा राजयोग हो किन्तु ग्रह बलहीन हो या शत्रुग्रह से दृष्ट या युक्त हो अथवा पापग्रह देखते हो तो राजयोग का फल नही होता॥ अथवा ६।८।११।१२ इन स्थानो म हो तो राजयोग का फल नही होता॥१७॥ अथवा राजयोग कारक ग्रह वक्री हो तो नाशकारक होते है॥१८॥

## अथ पारिजातादिशुभाशुभविचारमाह्

त्रिषडायाष्टरिष्फेशा पारिजाते व्यवस्थिता ॥ दायिकान्यभये भाये यत्र मे ये विचारिता ॥१९॥ द्वितीये चोत्तमास्ते ते तृतीये चान्यदा मता ॥ चतुर्थे ते च राजान पचमे गुरवो मता ॥२०॥ भूदेवाश्च तथा षष्ठे देवा ज्ञेयाश्च सप्तमे ॥ अष्टमे पशवो ज्ञेया दु खदाश्चात्र जन्मनि ॥२१॥ दु स्था ६।८।१२ श्चैव भवत्येते तदातेनैव बाधका ॥ केन्द्रकोणस्थिताश्चैव बाधकाश्चात्र जन्मनि ॥२२॥ विषमे च भवेत्स्त्रीणा समे ये पुरुषो मत ॥ षष्ठे वै चोरित द्रव्य ह्याष्टमे हनन कृतम् ॥२३॥ हनन हरण रिष्फे तृतीये कैतव कृतम् ॥ पौंश्चल्य बधने प्रोक्तकृतघ्नत्वभवेत्कृतम् ॥२४॥

पारिजात आदि योग

३।६।११।८।१२ इन स्थानो के स्वामी पारिजात योग मे पहले जैसा कहा है वैसे स्थित हो तो पारिजात योग होता है तथा पूर्वोक्त स्थानो के स्वामी द्वितीय स्थान मे हो तो उत्तम हो तृतीय स्थान मे हो तो मध्यम, चौथे मे हो तो राजा के समान पचम भाव मे हो तो गुरु, षष्ठ भाव मे हो तो भूदेव, सप्तम मे हो तो देव आठवे मे पशु छठे–बारहवे मे हो तो बाधक दु खदायी, जन्म मे हो तो दु खद केन्द्र और त्रिकोण मे हो तो बाधक। यह योग स्त्रियो के लिये विषम राशि मे और पुरुषो के लिये सम राशि मे देखना चाहिये। इन योगो का फल–स्त्रीजातक के लिये उपर्युक्त ग्रह छठे घर मे हो तो चोरी करनेवाली, आठवे मे हो तो हत्यारिणी, बारहवे हो तो हत्या और चोरी करनेवाली तीसरे हो तो धूर्त, सप्तम हो तो व्यभिचारिणी और कृतघ्न होती है॥१९॥२०॥२१॥२२॥२३॥२४॥

सुखाधिपात् ॥ मन्त्रेशोऽमात्यता याति सप्तमाधीशयोगतः ॥३९॥ कर्मेशस्य तु योगेन राजा साविघ्यतामियात् ॥ केद्रधर्मेशयोर्योगे राजा वै राजवदितः ॥४०॥ धर्मकर्माधिपौ चैव व्यत्यये तावुभौ स्थितौ ॥ युक्तश्चेद्वै तदा वाच्यः सर्वसौख्यसमन्वितः ॥४१॥ पारिजाते स्थितौ तौ तु नृपो लोकानुशासकः ॥ उत्तमो चोत्तमो भूपो गजवाजिरथादिमान् ॥४२॥ गोपुरे नृपशार्दूलो पूजितान्निर्नृपैर्भवेत् ॥ सिंहासने चक्रवर्ती सर्वक्षोणीप्रपालकः ॥४३॥ अस्मिन्योगे हरिश्चन्द्रो मानवश्चोत्तमस्तथा ॥ बलिर्वैश्वानरो राजा अन्ये चैव तु चक्रया ॥४४॥ कलौयुगे च भविता तथा राजा युधिष्ठिरः ॥ भविता शालिवाहश्च तथा विजयाभिनंदनः ॥४५॥ नागार्जुनस्तथा भूपस्तदन्ये चैव गोपुरे ॥ पारावताशकेन्ये च जाता मन्वादयस्तथा ॥४६॥ देवलोके तु प्रथमे हरेश्चेवावतारणम् ॥ मत्स्यादिकल्किपर्यन्ता सर्वे वर्गोद्भूवा मता ॥४७॥ द्वितीये देवलोके तु ज्ञेयाश्चेंद्रादयः परे ॥ ऐरावते च प्रथमे जातः स्वायंभुवो मनुः ॥४८॥ एवं सर्वप्रकारेण ज्ञात्वा चैवविचक्षणः ॥ कोणकेन्द्रादिनाथाना योगः सर्वविधायकः ॥४९॥ चतुःकेन्द्राधिपौ द्वौ च कोणपौ च धनाधिपः ॥ ऐरावतांशमस्यास्तेऽकुर्वल्लोकोत्तरोत्तरम् ॥ अनेनैव प्रकारेण वेत्ति सर्वत्र बुद्धिमान् ॥५०॥

इति श्रीबृहत्पाराशरहोराशास्त्रेपूर्वखण्डसारांशे राजयोगादिविचारकथनं नाम चतुर्विंशोऽध्यायः ॥२४॥

### विशेष योग

अब राजयोग में विशेष योग कहते हैं उन्हें यथार्थ रूप से जानना चाहिये। त्रिकोण स्थान लक्ष्मी का स्थान है और केन्द्र विष्णु का स्थान है। इनके सम्बन्ध से ही राजयोग होता है। केन्द्रेश और पंचमेश के योग से मंत्री योग होता है और यह योग पारिजात योग के नियमानुसार हो तो प्रबल राजयोग और प्रबलमंत्री योग होता है। लग्नेश का धनेश से योग हो तो राजयोग नहीं होता है। लग्नेश का सुखेश से सम्बन्ध हो तो एक योग सुखेश का पंचमेश से अथवा सप्तमेश से योग हो तो यह अमात्य योग है अर्थात् मंत्री योग है। लग्नेश का दशमेश में योग हो तो राजा अथवा मंत्री होता है। नवमेश का केन्द्रेश से योग हो तो राजा होता है। नवम और दशम के स्वामी परस्पर एक दूसरे के स्थान में अथवा दोनों नवम में या दशम में हो तो सम्पूर्ण सम्पत्तिशाली होता है। यदि पारिजात योग भी होता हो तो निश्चय राजा होता है। हाथी घोड़े आदि युक्त उत्तम राज्य मान्य होता है। गोपुर अंश में हो तो राजाधिराज होता है। सिंहासनांश में हो तो चक्रवर्ती सम्पूर्ण पृथ्वी का शासक राजा होता है। इस सिंहासनांश योग में जन्म लेने वाला जातक मानवश्रेष्ठ हरिश्चन्द्र अथवा राजा बलि के समान होता है। कलियुग में जन्म हो तो युधिष्ठिर शालिवाहन के समान होता है। गोपुर अंश में होने से नागार्जुन के समान राजा होता है। पारावतांश में ऋषि मनु के समान होता है। तथा देवलोक में ईश्वररूप तथा इस लोक में ईश्वरांश अवताररूप मत्स्यावतार से कल्कि अवतार पर्यन्त के अवतारों का आविर्भाव पारावतांश में होता है। देवलोक में इन्द्र होता है ऐरावतांश में स्वायंभुव मनु के समान होता है॥ इस प्रकार सूक्ष्म विचार करके देखने से प्रतीत होगा कि केन्द्र और कोण स्थान के योग ही सब महान् पुरुषों के जनक हैं। चार स्थान केन्द्र के तथा २

स्थान त्रिकोण के और धनस्थान ये ही सात स्थान ससार मे उत्तरोतर महान् विभूतियो जन्म देनेवाले है ॥ श्लोक ३६ से ५० ॥

इति श्री बृ० पा० हो० शा० पू० स० सा० राजयोगादिविचारकथन नाम चतुर्विंशोऽध्याय: ॥२४॥

## पराशर उवाच

अथात सम्प्रवक्ष्यामि राजयोगान्द्विजोत्तम ॥ येषा विज्ञानमात्रेण नृपपूज्यो जनो भवेत् ॥१॥ ये ये योगा पुरा शम्भुभाषिता शैलजाग्रत ॥ तेषा सारमह वक्ष्ये तवाग्रे द्विजनन्दन ॥२॥ चिन्तयेत्कारके लग्ने जनुर्लग्नेय वा द्विज ॥ राजयोगप्रदातारौ लग्नौ द्वौ प्रणतोदितौ ॥३॥ आत्मकारकपुत्राभ्या राजयोग प्रकल्पयेत् ॥ तनुपञ्चमनाथाभ्या तथैव द्विजसत्तम ॥४॥ विलग्नात्पंचमाधीशा पुत्रात्माकारको द्वयो ॥ विप्र सबधयोगेन ज्ञेया वीर्यबलान्विता ॥५॥ लग्नेऽथ सप्तमे चापि लग्नेशे सप्तमाधिपे ॥ पुत्रात्मकारकौ विप्र लग्ने वा सप्तमेपि च ॥६॥ सबधे वीक्षिते तत्र दृष्टैव पचमाधिपे ॥ उच्चता च नवाशस्थे शुभग्रहनिरीक्षिते ॥७॥ महाराजेति योगोय सोत्र जात सुखी नर ॥ गजवाजिरथैर्युक्त सेनासगमनेतया ॥८॥ भाग्येशात्कारके लग्ने पचमे सप्तमेऽपि वा ॥ राजयोगप्रदातारौ गजवाजिधनैरपि ॥९॥ कारकाद्द्विचतुर्थे च पचमे भावगे द्विज ॥ शुभखेटो न सदेहो राजयोग ददाति च ॥१०॥

हे द्विजोत्तम ! अब और राजयोग कहते हैं जिनके ज्ञान से मनुष्य राजपूज्य होता है॥१॥ जो योग भगवान् शकर ने पार्वती के सामने कहे थे, उन योगो मे से कुछ सारभूत योग तुमको सुनाते है॥२॥ भगवान् ने दो लग्नो से राजयोग का विचार कहा है, अत उनके वचनानुसार जन्मलग्न तथा कारकलग्न से राजयोग का विचार करना चाहिये॥३॥ आत्मकारक और पचमेश से राजयोग होता है। इसी प्रकार लग्नेश और पचमेश से राजयोग का विचार करे॥४॥ लग्न, पञ्चमभाव का सम्बन्ध यदि आत्मकारक और पुत्रकारक से हो और लग्न, पचम तथा कारक बलवान् हो तो राजयोग होता है॥५॥ लग्न अथवा सप्तमभाव मे—लग्नेश या सप्तमेश अथवा आत्मकारक और पुत्र कारक (अपने अपने भाव मे या परस्पर भाव मे) हो॥६॥ या परस्पर सम्बन्ध हो अथवा दृष्टि हो और इसी प्रकार पूर्वोक्त सम्बन्ध पचमभाव या भावेश मे हो, तथा उच्चराशि मे अथवा उच्चाश तथा नवाश मे हो एव शुभग्रहो की दृष्टि हो तो यह 'महाराज' नामक राजयोग होता है। इसमे जन्म लेनेवाला मनुष्य सुखी तथा हाथी, घोडे युक्त, चतुरग सेनायुक्त महाराजा होता है॥८॥ भाग्येश तथा आत्मकारक लग्न, पचम, सप्तम भाव मे हो तो भी पूर्ववत् राजा होता है॥९॥ आत्मकारक से २।४।५ इन भावो मे शुभग्रह हो तो राजयोग होता है॥१०॥

कारकान्वितये षष्ठे रात्योदभयपापयुक् ॥ राजवशोद्भवो विप्र राजयोगस्तथा भवेत् ॥११॥ भाग्येशाद्धननाथाद्वते तुर्ये च पचमे ॥ शुभखेटयुते विप्र राजा च भवति ध्रुवम् ॥१२॥ कारके

षष्ठभे पापे राजा च भवति ध्रुवम् ॥ योगद्वये शुभे पापे कथं स्यात्फलनिश्चय ॥१३॥ न दरिद्रो भवेज्जीवो न राजा जायते द्विज ॥ समानकुलज प्राज्ञ प्रतिष्ठा गौरवान्विता ॥१४॥ कारके पचमे शुक्र सितेन्दुयुतवीक्षित ॥ तन्वारूढपदे लग्ने राजवर्गो भवेन्नर ॥१५॥ जन्मांगे वापि कालांगे लिप्तांगे खेचरेक्षिते। रव्यादयस्त्रयस्थाने राजयोगप्रदायका ॥१६॥ जन्मांगे च हि होरांगे कुलांगे येन केन चित् ॥ रव्यादिदृष्टिमात्रेण स राजा भवति ध्रुवम् ॥१७॥ स्वक्षेत्रे तु नवांशे वा द्रेष्काणे भानुजादय ॥ लग्न च सप्तम विप्र पश्यति राजयोगदा ॥१८॥ पूर्णदृष्टे पूर्णयोगमर्द्धे चार्द्ध विधीयते ॥ पादेन पादयोग च राजयोगमिद क्रमात् ॥१९॥ षट्कुडल्यतरे विप्र पश्यति भास्करादय ॥ राजयोगप्रदातारो निर्विशक द्विजोत्तम ॥२०॥ लग्नस्थाने पूर्णदृष्ट्या सप्तमे स्वल्पवीक्षिते ॥ स्वल्पराज्यप्रदो विप्र षड्लग्नेषु विचिंतयेत् ॥२१॥

आत्मकारक से तीसरे तथा छठे भाव मे पापग्रह हो तो राजवशी के लिये राजयोग होता है॥११॥ लग्नेश और सप्तमेश से २।४।५ वे स्थान म शुभग्रह हो तो निश्चय राजा होता है॥१२॥ तीसरे छठे भाव मे पापग्रह हो तो राजा होता है। यह कह चुके है। अब कहते है कि यदि ३।६ मे पाप और २।४।५ मे शुभग्रह हो तो फल का निश्चय क्या हो ?॥१३॥ तो उसका निर्णय कहते है कि जातक न तो राजा ही होगा न दरिद्र ही रहेगा। प्रतिष्ठायुक्त गौरवशाली होकर मध्यम श्रेणी का होगा॥१४॥ पुत्रकारक शुक्र हो और शुक्लपक्ष के पूर्णचन्द्र से युक्त या दृष्ट हो। ऐसा शुक्र लग्न के आरूढ राशि मे (भाव) या लग्न मे हो तो जातक राजा श्रेणी मे होता है॥१५॥ जन्मलग्न मे या कालांग=होरालग्न मे एव लिप्तांग=घटीलग्न मे शुभग्रह स्थित हो तथा सूर्यादि क्रूरग्रह तीसरे भाव मे हो तो राजयोग कारक होते है॥१६॥ जन्मलग्न होरालग्न, घटी लग्न मे स्थित ग्रह से सूर्यादि ग्रह की दृष्टिमात्र से 'राजयोग होता है॥१७॥ शनि, राहु, केतु, स्वक्षेत्र मे, स्वनवांश मे या स्वद्रेष्काण मे स्थित होकर लग्न और सप्तमभाव को देखते हो तो 'राजयोग' कारक होते हैं॥१८॥ यह राजयोग पूर्णदृष्टि से पूर्ण तथा अर्द्धदृष्टि से आधा और पाददृष्टि से चौथाई जानना॥१९॥ इसी प्रकार षड्वर्ग की कुण्डली मे सूर्यादि ग्रहो की दृष्टि हो तो राजयोग कारक होते है॥ (यहा 'षट् कुण्डल्या' मात्र पर ही निर्देश है किन्तु ये छ कुण्डली कौनसी ली जाय यह नही बताया गया । अभी तक जिन कुण्डलियो से 'राजयोग का विचार हो रहा है वे ये है। जन्मलग्न, आरूढलग्न, कारकलग्न होरालग्न, उपपदलग्न घटीलग्न। क्या यही लेनी अथवा षड्वर्ग कुण्डली लेना। यह विज्ञजन विचार करे) लग्न मे पूर्णदृष्टि हो और सप्तमभाव मे पाददृष्टि हो तो साधारण धनीयोग जानना॥२१॥

एव नवांशकुडल्या द्रेष्काणेऽपि विचिन्तयेत् ॥ लग्नसप्तमयो खेटो राजयोगप्रदायक ॥२२॥ उच्चग्रहे राजयोगो लग्नद्वयमथापि चेत् ॥ राशेर्द्रेष्काणतोऽशाच्च राशेरशाद्वयापि वा ॥२३॥ यद्वा राशिदृकाणाभ्या लग्ने दृष्टे तु योगत ॥ प्रायेणेद जातक तु प्रभूणामेवदृश्यते ॥२४॥ जन्मकालघटीलग्न एकेनैव निरीक्षिते। तच्चारूढे तु सप्राप्ते चद्राक्रांते विशेषत ॥२५॥ क्रांते वा गुरुशुक्राभ्या केनाप्युच्चग्रहेण वा ॥ दुष्टार्गलापहाभावे राजयोगो न सशय ॥२६॥ शुभारूढे तत्र चद्रे धने देवगुरुस्तथा ॥ उच्चदृष्टे ग्रहे वाय ह्युच्चखेटे तथा ग्रहे ॥२७॥ राजयोगप्रदाता स निर्विशक द्विजोत्तम ॥ पत्रयेऽपि शुभारूढे चद्रे सति समानकम् ॥२८॥ उच्चग्रहे

### द्वादश अवस्था के फल

सूर्य के फल–सूर्य शयन अवस्था मे हो तो मन्दाग्नि, स्थूलता, नेत्ररोग, पित्तप्रकोप, व्रण, छाती मे शूल आदिरोग होते हैं।।५३।। सूर्य यदि उपवेशन अवस्था मे हो तो दरिद्रता, विहारशाली, (घुमक्कड) विद्या सम्बन्धी विवाद, कठोर चित्त तथा दरिद्र होता है।।५४।। सूर्य नेत्रपाणि प्रकम्पन अवस्था मे हो तो मनुष्य आनन्दी, विवेकी, परोपकारी, धनी तथा बलवान्, महासुखी, तथा राजकृपायुक्त होता है।।५५।।ग्रह यदि प्रकाशन अवस्था मे हो तो उदार, महाधनी,व्याख्याता धर्मात्मा, महाबली तथा सुन्दर होता है।।५६।। सूर्य गमन अवस्था मे हो तो प्रवासशाली, दुःखी, आलसी, निर्धन, भयातुर, क्रोधी होता है।।५७।। आगमन अवस्था मैं पर स्त्रीगामी, समाज बहिष्कृत, प्रवासी, कृपण खल (दुष्ट) कुमति तथा मलिन होता है।।५८।।

**सभागते हिते नरःपरोपकारतत्परःसदार्थरत्नपूरितो दिवाकरे गुणाकरः।। वसुंधरानवांबरालयान्वितो महाबली विचित्रमित्रवत्सलः कृपाकलाधरः परः ।।५९।। क्षोभितो रिपुगणैः सदा नरश्चंचलः खलमतिः कृशस्तथा ।। धर्मकर्मरहितो मदोद्धतश्चागमे दिनपतौ यदा तदा ।।६०।। सर्वांगसंधिवेदनापरांगनाधनक्षयो बलक्षयः पदे पदे यदा तदा हि भोजने ।। असत्यता शिरोव्यथा तथा वृथान्नभोजन स्वावसत्कथारतिः कुमार्गगामिनी मतिः ।।६१।। विजलोकैः सदा मंडितः पंडितः काव्यविद्यानवद्यप्रलापान्वितः ।। राजपूज्यो धरामंडले सर्वदा नृत्यलिप्सागते पद्मिनीनायके ।।६२।। सर्वदानन्दधर्ता जनो ज्ञानवान्यज्ञकर्ता धराधीशसद्मस्थितः ।। पद्मबंधावरातेर्भयं स्यान्मनः काव्यविद्याप्रलापी मुदा कौतुके ।।६३।। निद्राभरारक्तनिभे भवेतां निद्रागते लोचनपद्मयुग्मे ।। रवौ विदेशे वसतिर्जनस्य कलत्रहानिः कतिधार्थनाशः ।।६४।।**

सूर्य सभा मे हो तो मनुष्य परोपकार तत्पर, धनधान्य पूरित, गुणी, भूमि सम्पतियुक्त, महाबली, मित्र–वत्सल और कृपालु होता है।।५९।। सूर्य आगम अवस्था मे हो तो जातक शत्रु पीडित, चचल, दुष्टबुद्धि, दुर्बल, धर्मकर्म रहित तथा घमण्डी होता है।।६०।। सूर्य भोजन अवस्था मे हो तो सधि–वेदना, परागना रत, निर्धन, निर्बल, असत्यभाषी, असत्कथारति, (गपाडी) वृथान्नभोजी तथा कुमार्गगामी होता है।।६१।। सूर्य नृत्यलिप्सा अवस्था मे हो तो जातक विद्वत्समाज का मान्य पण्डित, मेधावी तथा राजपूज्य होता है।।६२।। सूर्य कौतुक अवस्था मे हो तो जातक सदानन्दी ज्ञानी, यज्ञकर्ता, राजनिवासी, काव्य विनोदी, तथा दुःखी होता है।।६३।। सूर्य निद्रावस्था मे हो तो निद्रालु, प्रवासी, भार्यारहित, दरिद्री होता है।।६४।।

*अथ चन्द्रफलम्–जनुःकाले क्षपानाथे शयनं चेदुपागते।।मानी शीतप्रधानश्च कामी वित्तविनाशकः ।।६५।। रोगार्दितो मन्दमतिर्विशेषाद्वित्तेन हीनो मनुजः कठोरः ।। अकार्यकारी परवित्तहारी क्षपाकरे चेदुपवेशनस्थे ।।६६।। नेत्रपाणौ क्षपानाथे महारोगी नरो भवेत् ।। अनल्पजल्पको धूर्तः कुकर्मनिरतः सदा ।।६७।। यदा राकानाथे गतवति विकाशं च जनने विकाराः संसारे विमलगुणराशेरवनिपात् ।। नवासावासा स्यात्करितुरगलक्ष्म्या परिवृता विभूषा योषाभिः सुखमनुदिनं तीर्थगमनम् ।।६८।। सितेतरे पापरतो निशाकरे विशेषतः*

**क्रूरतरो नरो भवेत् ॥ सदाशिरोगैः परिपीड्यमानो वलक्षपक्षे गमने भयातुरः ॥६९॥ विधवागमनो मानी पापरोगी नरो भवेत् ॥ गुप्तपापरतो दीनो मतितोषविवर्जितः ॥७०॥ सकलजनवदान्यो राजराजेन्द्रमान्यो रतिपतिसमकांतिः शांतिकृत्कामिनीनाम् ॥ सपदि सदसि याते चारुबिंबे शशांके भवति परमरीतिप्रीतिविज्ञो गुणज्ञः ॥७१॥**

चन्द्रफल—जन्मकाल में यदि चन्द्रमा शयनअवस्था में हो तो अभिमानी, कफप्रकृति, कामी और शांत स्वभाव का होता है॥६५॥ यदि चन्द्रमा उपवेशन में हो तो रोगी, मंदमति, दरिद्र, कठोर चोर, अकार्यकारी होता है॥६६॥ चन्द्रमा नेत्रपाणि अवस्था में हो तो महारोगी, बकवादी, धूर्त, कुकर्मी होता है॥६७॥ यदि चन्द्रमा विकाश अवस्था में हो तो जातक विकासबुद्धि राजाश्रयी,संसारप्रसिद्ध महाधनी,भोगी,तीर्थयात्राभिलाषी होता है॥६८॥ यदि चन्द्रमा कृष्णपक्ष में तथा गमनअवस्था में हो तो मनुष्य पापी, अतिक्रूर, शिर रोग से पीड़ित होता है। और शुक्ल पक्ष में जन्म हो तो भयातुर होता है॥६९॥ यदि चन्द्रमा आगम अवस्थामें हो तो जातक विधवागामी, अभिमानी, पापरोगी, गुप्तपापी, दीन, बुद्धिहीन तथा असन्तोषी होता है॥७०॥ यदि जन्मसमय में चन्द्रमा सभा में हो तो जातक समाज में मान्य, राजमान्य, अतिसुन्दर, कीर्तिमान्, कामिनीभोगी, रीतिनीति का जानने तथा गुणज्ञ होता है॥७१॥

**विधवागमनो मर्त्यो वाचालो धर्मपूरितः ॥ कृष्णपक्षे द्विभार्यः स्याद्रोगी वृष्टतरो हठी ॥७२॥ भाजने जनुषि पूर्णचंद्रमा मानयानजनतासुखं नृणाम् ॥ आतनोति वनितासुतामुखं सर्वमेव न सितेतरे शुभम् ॥७३॥ नृत्यलिप्सागते चंद्रे सबले बलवान्नरः ॥ गीतज्ञो हि रसज्ञश्च कृष्णे पापकरो भवेत् ॥७४॥ कौतुकभवनं गतवति चंद्रे भवति नृपत्वं वा धनपत्वम् ॥ कामकलासु सदा कुशलत्वंवारवधूरतिरमणपटुत्वम् ॥७५॥ निद्रागते जन्मनि मानवाना कलाधरे जीवयुते महत्त्वम् ॥ यदांगमासंचितवित्तनाशः शिवालयं रौति विचित्रमुच्चैः ॥७६॥**

चन्द्रमा आगम अवस्था में हो तो जातक विधवासेवी, वाचाल, धर्मात्मा, दो स्त्रीवाला, अतिवृष्ट, रोगी तथा हठी होता है॥७२॥ यदि चद्रमा भाजन अवस्था में हो तो सन्मान, सवारी, स्त्री, धन, संतान का सुख होता है। तथा कृष्णपक्ष में विपरीत फल होता है॥७३॥ यदि चद्रमा नृत्यलिप्सा अवस्था में हो तो मनुष्य बलवान्, गायन विद्या रसिक होता है। और कृष्णपक्ष में पापी होता है॥७४॥ यदि चद्रमा कौतुक भवन में हो तो मनुष्य राजा, धनपति, कुशल, तथा वारवनिता विलासी होता है॥७५॥ यदि चद्रमा निद्रा अवस्था में हो तो स्त्री, धनहीन, संचित धन का नाश करनेवाला तथा शिवालय में विचित्र प्रकार से शब्द करनेवाला होता है॥७६॥

**अथ कुजफलम्—शयने वसुधापुत्रे क्षतुरंगे व्रणो भवेत् ॥ बहुना कंडुना युक्तो दद्रुणा च विशेषतः ॥७७॥ बली सदा पापरतो नरः स्यादसत्यवादी नितरां प्रगल्भः ॥ धनेन पूर्णो निजधर्महीनो धरासुतश्चेदुपवेशनस्थः ॥७८॥ यदा भूमिसुते लग्ने नेत्रपाणिमुपागते ॥ दरिद्रता सदा पुसामन्यभे नगरेशता ॥७९॥ प्रकाशो गुणस्यापि वासः प्रकाशे धराधीशभर्तुः सदा मानवृद्धिः ॥ सुते भूसुते पुत्रकांतावियोगो भवेद्राहुणा दारुणो वा निपातः ॥८०॥ गमनागमने**

कुरुतेऽनुदिन व्रणजालभयं वनिताकलहः ॥ बहुदद्रुककण्डुभयं बहुधा वसुधातनयो वसुहानिकरः ॥८१॥ आगमने गुणशाली मणिमाली करालकरवाली ॥ गजगता रिपुहन्ता परिजनसंतापहारको भौमे ॥८२॥ तुंगे युद्धकलाकलापकुशलो धर्मध्वजो वित्तपः कोणे भूमिसुते सभामुपगते विद्याविहीनः पुमान् ॥ अंतेऽपत्यकलत्रमित्ररहितः प्रोक्तेतरस्थानगोऽवश्यं राजसभाबुधो बहुधनो मानी च दानी जनः ॥८३॥

मगल का फल–यदि मगल शयन अवस्था मे हो तो मनुष्य खाज, खुजली वाला होता है॥७७॥ यदि मगल उपवेशन अवस्था मे हो तो मनुष्य बलवान सदा पापरत असत्यभाषी, बकवादी, धनहीन, धर्महीन होता है॥७८॥ मगल जब लग्न मे नेत्रपाणि अवस्था मे हो तो पुरुष को दरिद्र करता है। वह मगल अन्यराशि मे हो तो नगर का स्वामी करता है॥७९॥ जब मगल प्रकाश अवस्था मे हो तो तब जातक के गुणो का प्रकाश करता है। राजा से सदा सन्मान की वृद्धि होती है। और पचमभाव मे हो तो पुत्र स्त्री से वियोग करता है। राहु से युक्त या दृष्ट हो तो दु खदायी पतन होता है॥८०॥ मगल गमनागमन अवस्था मे हो तो घावो से भय, स्त्री से कलह, वाद, खाज, खुजली तथा धनहानि कारक है॥८१॥ मगल आगमन अवस्था मे हो तो गुणी, मणि–माणिक युक्त, करवाल (शस्त्र) धारी, हाथी की सवारी तथा शत्रुनाश कारी तथा बन्धुओ का दु खहारी होता है॥८२॥ मगल तुग (उच्च) का होकर 'सभा' अवस्था मे हो तो युद्धविद्या निपुण, धर्मात्मा, धनी होता है। यदि त्रिकोण स्थान मे हो तो विद्याहीन तथा १२ भाव मे हो तो स्त्री पुत्ररहित करता है। अन्य स्थान मे बहुधनी, मानी तथा दानी होता है॥८३॥

आगमे भवति भूमिजे जनो धर्मकर्मरहितो गदातुरः ॥ कर्णमूलगुरुशूलरोगवानेव कातरमति कुसगमी ॥८४॥ भोजने मिष्टभोजी च जनने सबले कुजे ॥ नीचकर्मकरो नित्य मनुजो मानवर्जितः ॥८५॥ नृत्यलिप्सागते भूसुते अम्मनामिदिरारराशिरायाति भूमीपतेः ॥ स्वर्णरत्नप्रवालैः सदामडितो वासशाला नराणा भवेत्सर्वदा॥८६॥कौतुकी भवति कौतुके कुजे मित्रपुत्रपरिपूरितो जनः ॥ उत्सवो नृपतिगेहमंडितः पूजितो गुणवरैर्गुणाकरैः ॥८७॥ निद्रावस्था गते भौमे क्रोधी धीधनवर्जित ॥ धूर्तो धर्मपरिभ्रष्टो मनुष्यो गदपीडितः ॥८८॥

यदि मगल आगम अवस्था मे हो तो जातक धर्मकर्म रहित, रोगी, कर्णमूल मे रोगी, डरपोक तथा कुसगति वाला होता है॥८४॥ यदि मगल भोजन अवस्था मे हो और बलवान् हो तो मिष्टान्नभोजी, नीचकर्मकारी, तथा मानहीन होता है॥८५॥ मगल 'नृत्यलिप्सा' अवस्था मे हो तो बहुलक्ष्मी की प्राप्ति होती है। सुवर्ण रत्न आदि प्राप्त होता है। रहने की निजी विशाल भवन होता है॥८६॥ मगल कौतुक अवस्था मे हो तो जातक कौतुक मे आश्चर्यजनक खेल जाननेवाला, मित्र–पुत्र युक्त हो तथा राशि मे हो तो राजमहलो मे गुन गुणियो से पूजित होता है॥८७॥ मगल निद्रावस्था मे हो तो जातक क्रोधी, मूर्ख, दरिद्री, धूर्त, धर्मभ्रष्ट तथा रोगी होता है॥८८॥

## अथ बुधफलम्

क्षुधातुरो भवेदंगी संजो गुंजानिभेक्षणः ॥ अन्यभे लपटो धूर्तो मनुजः शयने बुधे ॥८९॥ शशाकपुत्रे जनुरगमेहे यदोपवेशे गुणराशिपूर्णः ॥ पापेक्षिते पापयुते दरिद्रो हिते शुभे वित्तसुखी मनुष्यः ॥९०॥ विद्याविवेकरहितो हिततोषहीनो मानी जनो भवति चद्रसुतेऽक्षपाणौ ॥ पुत्रालये सुतकलत्रसुखेन हीनः कन्याप्रजो नृपतिगेहबुधो वरार्यः ॥९१॥ दाता दयालुः खलु पुण्यकर्ता विकाशने चद्रसुते मनुष्यः ॥ अनेकविद्यार्णवपारगता विवेकपूर्णः खलवर्गहन्ता ॥९२॥ गमनागमने भवतो गमने बहुधा बसुधाधिपतेर्भवने ॥ भवन च विचित्रमल रमया विदि नुश्च अनुः समये नितराम् ॥९३॥

बुध का फल–बुध शयन अवस्था मे हो तो मनुष्य खजा (लगडा), लाल आखवाला, अन्य राशि मे हो तो लम्पट और धूर्त होता है॥८९॥ यदि बुध उपवेश अवस्था मे हो और लग्न मे हो तो अनेक गुणशाली होता है।और यदि पापराशिमे पापग्रह युक्त हो तो दरिद्र तथा मित्र राशि मे शुभग्रह युक्त हो तो धनवान् और सुखी होता है॥९०॥ यदि बुध नेत्रपाणि अवस्था मे हो तो जातक विद्या और विवेक से हीन तथा असन्तोषी और अभिमानी होता है। यदि पचम भाव मे हो तो पुत्र व स्त्री सुख से हीन तथा कन्या सन्तान वाला, राजमान्य तथा धनी होता है॥९१॥ यदि बुध विकाश अवस्था मे हो तो जातक दयालु, दानी, धर्मात्मा और अनेक विद्या पारगत, विवेकी तथा दुष्टो का नाश करनेवाला होता है॥९२॥ यदि बुध गमनागमन अवस्था मे हो तो मनुष्य यात्रा प्रेमी, राजभवन मे मान्य, बहुलक्ष्मी स्वामी विद्वान् तथा धनी होता है॥९३॥

सपदि विबजनानामुच्चगे जन्मकाले सदसि धनसमृद्धि सर्वदा पुण्यवृद्धि ॥ धनपतिसमता वा भूपता मत्रिता वा हरिहरपदभक्तिः सात्त्विकी मुक्तिलब्धि ॥९४॥ आगमे जनुषि जन्मिना यशा चन्द्रजे भवति हीनसेवया ॥ अर्थसिद्धिरपि पुत्रयुग्मता बालिका भवति मानदायिका ॥९५॥ भोजने चन्द्रमा जन्म काले मदा जन्मिनामर्थहानि. सदा वादतः ॥ राजभीत्या हृतत्व चलत्व मतेरगसगो न जाया न मायासुखम् ॥९६॥ नृत्यलिप्सागते चद्रजे मानवो मानयानप्रवालव्रजैः सयुत. ॥ मित्रपुत्रप्रतापे सभापडित. पापभे वारवामारते लम्पटः ॥९७॥

यदि जन्म समय मे बुध उच्च राशि का होकर सभा स्थान मे हो तो धन समृद्धि तथा धर्मात्मा, कुबेर के समान ऐश्वर्यशाली, राजा का मत्री, ईश्वर भक्ति परायण, सात्विक भाववाला होता है तथा अन्त मे मुक्ति प्राप्त होती है॥९४॥ जब जन्मलग्न मे बुध आगम अवस्था मे हो तो नीच की सेवा करनेवाला किन्तु धनी और दो पुत्र और एक कन्या होती है॥९५॥ जन्म काल मे बुध जब भोजन अवस्था मे हो तो मनुष्य का धन मुकदमे बाजी मे खर्च होता है। राजभय से सदा दु खी रहता है। चचल बुद्धि तथा भार्यासुख और धन सुख से हीन हो॥९६॥ जब बुध नृत्य लिप्सा अवस्था मे हो तो मनुष्य सन्तान, सवारी, रत्नो मे युक्त, मित्र–पुत्रयुक्त, प्रतापी और सभा पण्डित होता है। पाप राशि मे हो तो वार–वनिता–विलासी तथा लम्पट होता है॥९७॥

कौतुके चन्द्रजे जन्मकाले नृणामभभे गीतविद्याऽनवद्या भवेत् ॥ सप्तमे नैधने वारवध्वा रति पुण्यभे पुण्ययुक्ता मति सद्गति ॥९८॥ निद्राश्रिते चन्द्रसुते न निद्रासुख सदा व्याधिसमाधियोग ॥ सहोत्थवैकल्यमनल्पतापो निजेन वादो धनमाननाश ॥९९॥

अथ गुरुफलमाह

वचसामधिपे तु जनु समये शयने बलवानपि हीनरव ॥ अतिगौरतनु खलु दीर्घहनु सुतरामरिभीतियुतो मनुज ॥१००॥ उपवेश गतवति यदि जीवे वाचालो बहुगर्वपरीत ॥ क्षोणीपतिरिपुजनपरितप्त पदजघास्यकरव्रणयुक्त ॥१०१॥ नेत्रपाणि गते देवराजार्चितेरोग युक्तोविमुक्तोवरार्थश्रिया ॥ गीतनृत्यप्रिय कामुक सर्वदा गौरवर्णो विवर्णोद्भव प्रीतियुक् ॥१०२॥

जब बुध जन्म समय मे कौतुक अवस्था म हो तो निष्पाप गायन विद्यायुक्त होता है। ७ वे और ८ वे स्थान मे हो तो वेश्यागामी होता है। शुभ राशि मे हो तो पवित्र बुद्धिवाला होता है और अन्त मे सद्गति होती है॥९८॥ जब बुध निद्रा अवस्था मे हो तो जातक सदा रोगी विकल दु खी कलहकारी और धन मान से हीन होता है॥९९॥

गुरुफल—जन्म समय मे यदि बृहस्पति बलवान् होकर शयन अवस्था मे हो तो धीमी आवाज वाला गौर वर्ण लम्बी ठोडीवाला तथा शत्रु मे भय माननेवाला होता है॥१००॥ जब बृहस्पति उपवेश अवस्था मे हो तो जातक बकवादी घमण्डी राजा और शत्रु से दु खी तथा पैर जघा हाथ और मुख व्रणयुक्त होता है॥१०१॥ जब बृहस्पति नेत्रपाणि अवस्था मे हो तो रोगी दरिद्री नाचगानप्रिय कामी गौरवर्ण वर्णशकर तथा प्रेमी होता है॥१०२॥

गुणानामानन्द विमलसुखकन्द वितनुते सदा तेज पुज व्रजपतिनिकुजप्रतिगमम् ॥ प्रकाशे चेदुच्चै हुतभुगतो वासवगुरुर्गुरुत्व लोकाना धनपतिसमत्व तनुभृताम्॥१०३॥साहसी भवति मानव सदा मित्रवर्गसुखपूरितो मुदा ॥ पडितो विविधवित्तमडितो वेदविद्यदि गुरौ गम गते ॥१०४॥ आगमनेजनता वरजाया यस्य जनुसमये हरिमाया ॥ मुचति नालमिहालयमद्धा देवगुरौ परित परिबद्धा ॥१०५॥ सुरगुरुसमवक्ता शुभ्रमुक्ताफलाढ्य सदसि सपदि पूर्णो वित्तमाणिक्यमाने ॥ गजतुरगरथाढ्यो देवताधीशपूज्यो जनुषि विविधविद्यागर्वितो मानव स्यात् ॥१०६॥ नानावाहनमानयानपटलीसौख्य गुरावागमे भृत्यापत्यकलत्रमित्रजसुख विद्याऽनवद्या भवेत् ॥ क्षोणीपालसमानतानवरत चातीवहृद्या मति काव्यानदरति सदा हितगति सर्वत्र मानोन्नति ॥१०७॥

जब बृहस्पति प्रकाश अवस्था म हो तो गुणी सुखी तजस्वी राजमान्य लोकमान्य महाधनी होता है॥१०३॥ जब बृहस्पति गमन अवस्था मे होता है तो मनुष्य साहसी मित्रवर्गयुक्त पण्डित धनी तथा विद्वान् होता है॥१०४॥ जब बृहस्पति जन्मलग्न मे आगम अवस्था म होता है तो श्रेष्ठ भार्या तथा स्थिर लक्ष्मीवाला होता है॥१०५॥ जब बृहस्पति सभा अवस्था म हो तो जातक बृहस्पति के समान वक्ता मणिमाणिक्ययुक्त ऐश्वर्यशाली तथा

अनेक विद्यापारगत होता है॥१०६॥ बृहस्पति यदि आगम अवस्था मे हो तो मनुष्य के अनेक सवारी तथा नौकर-चाकर, भार्या, पुत्र, मित्र का सुख तथा श्रेष्ठ विद्या होती है। और निरन्तर राजा के समान ऐश्वर्य तथा निर्मल बुद्धि और काव्य विनोद तथा कल्याण एवं सन्मान की उन्नति होती है॥१०७॥

**भोजने भवति देवपुरोधाः यस्य तस्य सततं सुभोजनम् ॥ नैव मुंचति रमालयं तदा वाजिवारणरथैश्च मंडितम् ॥१०८॥ नृत्यलिप्सागते राजमानी धनी देवताधीशवंद्यः सदा धर्मवित् ॥ तंत्रविज्ञो बुधैर्मंडितः पंडितः शब्द विद्यानवद्यो हि सद्यो जनः ॥१०९॥ कुतूहली सकौतुके महाधनी जनः सदा ॥ निजान्वये च भास्करः कृपाकलाधरः सुखी ॥ निखिंपराजपूजिते सुतेन भूनयेन वा युतो महाबली धराधिपेन्द्रसद्मपंडितः ॥११०॥ गुरौ निद्रागते यस्य मूर्खता सर्वकर्मणि ॥ दरिद्रतरपरिक्रान्तं भवनं पुण्यवर्जितम्॥१११॥**

देवगुरु जब भोजन अवस्था मे हो तो निरन्तर अच्छा भोजन, सदा रहनेवाली लक्ष्मी तथा अनेक प्रकार की सवारी वाला होता है॥१०८॥ बृहस्पति नृत्य लिप्सा अवस्था में हो तो जातक राजमानी, धनी धर्मात्मा, तन्त्र विद्या विशारद, विद्वद्गोष्ठीयुक्त, पण्डित तथा श्रेष्ठ वैयाकरणी होता है॥१०९॥ जब बृहस्पति कौतुक अवस्था मे हो तो कौतुहल प्रिय, महाधनी, कृपालु, अपने कुल का सूर्य, सुखी, भूमि तथा सन्तानयुक्त, महाबली तथा राजाधिराज की सभा का पण्डित होता है॥११०॥ बृहस्पति यदि निद्रा अवस्था मे हो तो कर्मज्ञानहीन, मूर्ख, पुण्यहीन, दरिद्री होता है॥१११॥

### अथ भृगुफलमाह

**जनो बलीमानपि दंतरोगी भृगौ महारोषसमन्वितः स्यात् ॥ धनेन हीनः शयनं प्रयाते वारांगनासंगमलंपटश्च ॥११२॥ यदि भवेद्भृगुजा उपवेशने नवमणिव्रजकांचनभूषणैः ॥ सुखमजस्रमरिक्षय आदराद्यवनिपादपि मानसमुन्नतिः ॥११३॥**

शुक्र फल-जिस मनुष्य के जन्म लग्न मे शुक्र क्रोधी अवस्था मे होता है तो मनुष्य दन्त-रोगी होता है। और यदि शयन अवस्था मे हो तो धनहीन, वैश्यागामी और लम्पट होता है॥११२॥ यदि शुक्र उपवेश अवस्था मे हो तो मणि, काचन, भूषणयुक्त, निरन्तर सुखी, शत्रु क्षय, राजा से सम्मान पानेवाला होता है॥११३॥

**नेत्रपाणिं गते लग्नगेहे कवौ सप्तमे मानभे यस्य तस्य ध्रुवम्॥नेत्रपाते निपातो धनानामलं चान्यभे वासशाला विशाला भवेत्॥११४॥स्वालये तुंगभे मित्रभे भार्गवे तुंगमातंगलीलाकलापी जनः ॥ भूपतेस्तुल्य एव प्रकाश गते काव्यविद्याकलाकौतुकी गीतवित् ॥११५॥ गमने जनने शुक्रे तस्य माता न जीवति ॥ आधियोगो वियोगश्च जनानामरिभीतितः ॥११६॥ आगमनं भृगुपुत्रे गतवति विलेश्वरे मनुजः ॥ सत्तीर्थश्रमशाली नित्योत्साही कराङ्घ्रिरोगी च ॥११७॥ अनायासेनालं सपदि महसा याति सहसा प्रगल्भत्व राज्ञः सदसि गुणवित् किल कवौ ॥**

**सभायामायाते रिपुनिवहहन्ता धनपतेः समत्वं वा दाता बलतुरगगता नरवरः ॥११८॥ आगमे भार्गवेनागमो जन्मिनामर्थराशेररातेरतीव क्षतिः ॥ पुत्रपातो निपातो जनानामपि व्याधिभीतिः प्रियाभोगहानिर्भवेत् ॥११९॥**

यदि शुक्र नेत्रपाणि अवस्था मे लग्न, सप्तम या दशम भाव मे हो तो हर तरह से धन की प्राप्ति हो। अन्य राशि मे हो तो विशाल भवन हो॥१०४॥ यदि शुक्र प्रकाश अवस्था मे अपनी राशि का या उच्च राशि अथवा मित्र राशि मे हो तो उस मनुष्य के हाथी घोडे हो, राजा के तुल्य ऐश्वर्य हो। काव्य विनोदी एव गायन विद्या रसिक हो॥११५॥ जिस मनुष्य के जन्म लग्न मे शुक्र गमन अवस्था मे हो उसको माता का सुख नही होता तथा सदा रोगी, इष्ट जनो का वियोग एव शत्रुभय होता है॥११६॥ शुक्र यदि आगमन अवस्था मे हो तो धनी, तीर्थ यात्रा प्रेमी, उत्साही तथा हाथ पैर का रोगी होता है॥११७॥ यदि शुक्र सभा अवस्था मे हो तो बिना परिश्रम के सहसा लक्ष्मी आती है। राजा की सभा मे चतुर, विद्वान्, कवि और गुणी होता है, शत्रु नाश करनेवाला, धन कुबेर, सवारीवाला और माननीय होता है॥११८॥ यदि शुक्र आगम अवस्था मे हो तो शत्रु के कारण धन की हानि, पुत्र तथा बन्धुओ की हानि, भार्या हानि एव रोग भय होता है॥११९॥

**क्षुधातुरो व्याधिनिपीडितः स्यादनेकधारातिभयार्दितश्च ॥ कवौ यदा भोजनगे युवत्या महाधनीः पण्डितमण्डितश्च ॥१२०॥ काव्यविज्ञानवद्या च बुद्धा मतिः सर्वदा नृत्यलिप्सागते भार्गवे ॥ शङ्खवीणामृदंगादिगानध्वनिर्यातनैपुण्यमेतस्य वित्तोन्नतिः ॥१२१॥ कौतुकभवनगतवति शुक्रे शक्रेशस्य सदसि महत्त्वम् ॥ हृद्या विद्या भवति च पुंसः पद्मा निवसति सद्मावरतं ॥१२२॥ परसेवारतो नित्यं निद्रामुपगते कवौ ॥ परनिंदापरो वीरो वाचालो भ्रमते महीम् ॥१२३॥**

जब शुक्र क्षुधित अवस्था मे हो तो रोगी, शत्रुभय तथा दुःखी होता है। और शुक्र जब भोजन अवस्था मे हो तो महाधनी भार्यासुख और पण्डितो से मान्य होता है॥१२०॥ जब शुक्र नृत लिप्सा अवस्था मे हो तो निष्पाप कविता बनानेवाला, सुबुद्धि, अनेक प्रकार के वाद्य तथा गान मे निपुण और धनी होता है॥१२१॥ जब शुक्र कौतुक अवस्था मे हो तो सभा मे इन्द्र के समान आदर पानेवाला, विद्वान और सदा लक्ष्मीवाला होता है॥१२२॥ जब शुक्र निद्रा अवस्था मे हो तो दूसरे का नौकर निन्दक वाचाल और घुमक्कड होता है॥१२३॥

अथ शनिफलम्

**क्षुत्पिपासापरिक्रांतो विश्रांतः शयने शनौ ॥ वयसि प्रथमे रोगी ततो भाग्यवता वरः ॥१२४॥ भानोः सुते चेदुपवेशनस्थे करालकारातिजनानुतप्तः ॥ अपायगामी ननु दद्रुमानी नरोऽभिमानी नृपदण्डयुक्तः ॥१२५॥ नयनपाणिगते रविनंदने परमया रमयारमयायुतः ॥ नृपतितो हिततो मतितोषकृद्बहुकलाकलितो विमलोक्तिकृत्॥१२६॥ नानागुणग्रामधनाधिगाती सदा नरो बुद्धिविनोदमाली ॥ प्रकाशने भानुसुते सुभानुः कृपानुरक्तो हरपादभक्तः**

॥१२७॥ महाधनीनन्दननन्दितः स्यादधर्मकारी रिपुभूमिहारी ॥ गमे शनौ पण्डितराजभाव धरापतेरायतने प्रयाति ॥१२८॥ आगमने पदगर्दभयुक्तः पुत्रकलत्रसुखेन विमुक्तः ॥ भानुसुते भ्रमते भुवि नित्यं दीनमना विजनाश्रयभावम् ॥१२९॥ रत्नावलीकाञ्चनमौक्तिकानां व्रातेन नित्यं व्रजति प्रमोदम् ॥ सभागते भानुसुते नितांतं नयेन पूर्णो मनुजो महौजाः ॥१३०॥ आगमे गदसमागमो नृणामब्जबन्धुतनये यदा तदा ॥ मन्दमेव गमनं धरापतेर्याचनाविरहिता मतिः सदा ॥१३१॥

शनिफल—यदि शनि शयन अवस्था मे हो तो भूख प्यास से व्याकुल तथा प्रथम अवस्था मे रोगी और वृद्धावस्था मे भाग्यशाली होता है॥१२४॥ शनि यदि उपवेश अवस्था मे हो तो समाज से दु खी, कैदी, विघ्नबाधायुक्त, दाद, खाजका रोगी तथा राजदडभोगी होता है॥१२५॥ शनि यदि नयन पाणि अवस्था मे हो तो परम श्रेष्ठ लक्ष्मीयुक्त राजा तथा बान्धवो का हितैषी और संतोष पानेवाला तथा कलाकुशल एव मिष्टभाषी होता है॥१२६॥ शनि जब प्रकाश अवस्था मे हो तो अनेक गुणयुक्त तथा ऐश्वर्यशाली तथा विनोदी, कृपालु तथा हरिभक्त होता है॥१२७॥ शनि गमन अवस्था मे हो तो जातक महाधनी, पुत्रयुक्त, दुष्टबुद्धि तथा शत्रु की भूमि का हरण करनेवाला एव राजभवन मे पण्डितराज तुल्य माननीय होता है॥१२८॥ शनि यदि आगमन अवस्था मे हो तो गधे के समान तथा स्त्री–पुत्र सुखहीन, व्यर्थ विचरणशील दीन तथा जनाश्रयहीन होता है॥१२९॥ शनि यदि सभा अवस्था मे हो तो रत्न, सुवर्ण, मोती आदि की प्राप्ति का सुख तथा नीतिमान् तेजस्वी होता है॥१३०॥ शनि आगम अवस्था मे हो तो जातक रोगी मन्दगामी, मनस्वी एव कभी याचना नही करता॥१३१॥

**सुगतेऽनुषि भानुनन्दने भोजनं भवति भोजनं रसैः ॥ सयुतं नयनमन्दतान्तता मोहतापपरितापिता मतिः ॥१३२॥ नृत्यलिप्सागते मन्दे धर्मात्मा वित्तपूरितः ॥ राजपूज्यो नरो धीरो महावीरो रणागमे ॥१३३॥ भवति कौतुकभावमुपागते रविसुते वसुधावसुपूरितः ॥ अतिसुखी सुमुखीसुखपूरितः कवितयामलया कलया नरः ॥१३४॥ निद्रागते वासरनाथपुत्रे धनी सदा चारुगुणैरुपेतः ॥ पराक्रमी चण्डविपक्षहन्ता सुवारकान्तारतिरीतिवित्तः ॥१३५॥**

शनि यदि भोजन अवस्था मे हो तो जातक को रसयुक्त भोजन प्राप्त होता है, दृष्टि गाध, तथा मोह एव दु ख से दु खी रहता है॥१३२॥ शनि नृत्यलिप्सा अवस्था मे हो तो धर्मात्मा धनी, राजपूज्य, धीर तथा रणशूर होता है॥१३३॥ शनि यदि कौतुकभाव मे हो तो जातक धन, भूमियुक्त होता है। अतिसुखी तथा स्त्रीसुखयुक्त श्रेष्ठक वित्वशक्ति युक्त होता है॥१३४॥ शनि निद्रा अवस्था मे हो तो जातक सदा धनी, सुन्दर गुणयुक्त पराक्रमी, शत्रुनाशकारी तथा वारविलासिनी रति प्रिय होता है॥१३५॥

### अथ राहुफलम्

**मदागमो जन्मनि यस्य राहौ क्लेशाधिकत्वं शयनं प्रयाते॥वृषेऽथ युग्मेऽपि च कन्यकायामजे समाजो धनधान्यराशेः ॥१३६॥ उपवेशनमिह गतवति राहौ दद्रुगदेन जनः परितप्तः ॥ राजसमाजयुतो बहुमानी वित्तसुखेन सदा रहितः स्यात् ॥१३७॥ नेत्रपाणावगो नेत्रे भवतो**

**रोगपीडिते ॥ दुष्टव्यालारिचौराणां भयं तस्य धनक्षयः ॥१३८॥**

राहु फल—जन्म लग्न मे राहु शयन अवस्था मे हो तो अधिक क्लेशकारी होता है। तथा १।२।३।६ राशि मे हो तो धन, धान्य समूहाधिपति होता है॥१३६॥ राहु उपवेश अवस्था मे हो तो जातक दाद रोग से दु:खी रहता है। राजसभा में गति होने पर भी घमण्डी होने से सदा धनहीन रहता है॥१३७॥ राहु नेत्रपाणि अवस्था मे हो तो जातक के नेत्र रोगी ही रहते हैं तथा सर्प, चोर, आदि से भय और धन हानि होती है॥१३८॥

**प्रकाशने शुभासने स्थितिः कृतिः शुभा नृणां धनोन्नतिर्गुणोन्नतिः सदा विदामगाविह ॥ धराधिपाधिकारता यशोलता तदा भवेच्छ्यामभीरताकृतिर्विदेशतो महोन्नतिः ॥१३९॥ गमने च यदा राहौ बहुसंतानवान्नरः ॥ पंडितो धनवान्दाता राजपूज्यो नरो भवेत् ॥१४०॥ राहावागमने क्रोधी सदा धीधनवर्जितः ॥ कुटिलः कृपणः कामी नरो भवति सर्वथा ॥१४१॥ सभागतो यदा राहुः पंडितः कृपणो नरः ॥ नानागुणपरिक्रांतो वित्तसौख्यसमन्वितः ॥१४२॥ वेदगावागमं यस्य याते तदा व्याकुलत्वं सदारातिभीत्याभयम् ॥ महद्बन्धुवादो जनानां निपातो भवेद्वित्तहानिः शठत्वं कृशत्वम् ॥१४३॥ भोजने भोजनेनालं विकलो मनुजो भवेत् ॥ मन्दबुद्धिः क्रियाभीरुः स्त्रीपुत्रसुखवर्जितः ॥१४४॥ नृत्यलिप्सागते राहौ महाव्याधिविवर्द्धनम् ॥ नेत्ररोगो रिपोर्भीतिर्धनधर्मक्षयो नृणाम् ॥१४५॥**

राहु प्रकाशन अवस्था मे हो तो शुभआसन (स्थान) मे स्थिति हो, धनवृद्धि तथा गुणो की उन्नति होती है राजपद का अधिकारी होता है। श्याम वर्ण और विदेश मे उन्नति होती है॥१३९॥ राहु गमन अवस्था मे हो तो सन्तान बहुत होती है। जातक पडित तथा मेधावी, धनवान्, दानी, राजपूज्य होता है॥१४०॥ राहु आगमन अवस्था मे हो तो जातक निर्बुद्धि, धनहीन, कुटिल, कृपण तथा कामी होता है॥१४१॥ राहु सभा अवस्था मे हो तो पण्डित, कृपण, कामी, नाना गुणयुक्त तथा धनी और सुखी होता है॥१४२॥ यदि राहु आगमन अवस्था मे हो व्याकुल तथा शत्रुभय से पीडित, बन्धुओ से विवादी और धन हानि, शठ, कृश और जनहीन होता है॥१४३॥ राहु भोजन अवस्था मे हो तो जातक को भोजन की ही चिन्ता रहती है। मन्दबुद्धि कामचोर तथा स्त्री पुत्र सुख हीन होता है॥१४४॥ राहु नृत्यलिप्सा अवस्था मे हो तो रोग बढता ही रहता है। नेत्र रोगी ही रहते हैं, शत्रु से भय, धन तथा धर्म का क्षय होता है॥१४५॥

**कौतुके च यदा राहौ स्थानहीनो नरो भवेत् ॥परदाररतो नित्य परवित्तापहारकः ॥१४६॥ निद्रावस्थां गते राहौ गुणग्रामयुतो नरः ॥ कान्तासन्तानवान्धीरो गर्वितो बहुवित्तवान् ॥१४७॥**

अथ केतुफलम्

**मेषे वृषेऽथ वा युग्मे कन्यायां शयनं गते ॥ केतौ धनसमृद्धिः स्यादन्यभे रोगवर्धनम् ॥१४८॥**

उपवेश गते केतौ दद्रुरोगविवर्द्धनम् ॥ अरिवातनृपव्यालचौरशंका समन्ततः ॥१४९॥ नेत्रपाणि गते केतौ नेत्ररोग प्रजायते ॥ दुष्टसर्पादिभीतिश्च रिपुराजकुलादपि ॥१५०॥ केतौ प्रकाशने सञे धनवान्धार्मिकः सदा ॥ नित्यं प्रवासी चोत्साही सात्त्विको राजसेवकः ॥१५१॥ गमेच्छाया भवेत्केतुर्बहुपुत्रो महाधनः ॥ पंडितो गुणवान्दाता जायते च नरोत्तमः ॥१५२॥ आगमे च यदा केतुर्नानारोगो धनक्षयः ॥ दंतघाती महारोगी पिशुनः परनिंदकः ॥१५३॥

जब राहु कौतुक अवस्था मे हो तो मनुष्य को रहने का ठिकाना भी नही रहता। परस्त्रीगामी तथा चोर होता है॥१४६॥ राहु निद्रावस्था मे हो तो गुण समूह युक्त, स्त्री पुत्र से सुखी धनी, गर्वीला तथा धीर होता है॥१४७॥

केतु फल—केतु शयनअवस्था मे १।२।३।६ राशि मे हो तो धनसमृद्धि हो, और राशियो मे हो तो रोग की वृद्धि हो॥१४८॥ केतु उपवेश अवस्था मे हो तो दाद—खाज आदि रोग तथा शत्रु, सर्प, चोर तथा राज भय रहता है॥१४९॥ केतु नेत्रपाणि अवस्था मे हो जो जातक को नेत्ररोग तथा सर्पभय एव शत्रु और राजकुल से भय होता है॥१५०॥ केतु प्रकाश अवस्था मे हो तो धनवान्, धार्मिक, प्रवासी, उत्साही सात्विकभाववाला और राजसेवक होता है॥१५१॥ केतु गमन अवस्था मे हो तो पुत्र बहुत हों तथा धनी पण्डित, गुणी और दाता होता है॥१५२॥ जब केतु आगम अवस्था मे हो जो जातक को नाना रोग धनक्षय, दन्तरोग आदि होते है। और चुगलखोर तथा परनिन्दक होता है॥१५३॥

सभावस्था गते केतौ वाचालो बहुगर्वितः ॥ कृपणो लम्पटश्चैव धूर्तविद्याविशारदः ॥१५४॥ यदागमे भवेत्केतुः केतुः स्यात्पापकर्मणाम् ॥ बन्धुवादरतो दुष्टो रिपुरोगनिपीडितः ॥१५५॥ भोजने तु जनो नित्यं क्षुधया परिपीडितः ॥ दरिद्रो रोगसंतप्तः केतौ भ्रमति मेदिनीम् ॥१५६॥ नृत्यलिप्सागते केतौ व्याधिना विकलो भवेत् । बुद्बुदाक्षो दुराधर्षो धूर्तोऽनर्थकरो नरः ॥१५७॥ कौतुकी कौतुके केतौ नटवामारतिप्रियः ॥ स्थानभ्रष्टो दुराचारो दरिद्रो भ्रमते महीम् ॥१५८॥ निद्रावस्था गते केतौ धनधान्यसुखं महत् ॥ नानागुणविनोदेन कालो गच्छति जन्मिनाम् ॥१५९॥

केतु 'सभा' अवस्था मे हो तो वाचाल, अभिमानी, कृपण, लम्पट तथा धूर्त होता है॥१५४॥ केतु यदि 'आगम' अवस्था मे हो तो जातक पापी, बन्धु मे कलह करनेवाला दुष्ट एव शत्रु तथा रोगी होता है॥१५५॥ केतु यदि 'भोजन' अवस्था मे हो तो जातक भिखमगा, दरिद्र, रोगी तथा घुमक्कड होता है॥१५६॥ केतु 'नृत्यलिप्सा' मे हो तो सदा रोगी तथा आंख की बीमारी वाला, धूर्त तथा अनर्थकारी होता है॥१५७॥ केतु 'कौतुक' अवस्था मे हो तो नटजाति की स्त्री का प्रेमी, स्थानभ्रष्ट, दुराचारी, दरिद्र तथा भ्रमणप्रेमी होता है॥१५८॥ केतु 'निद्रा' अवस्था मे हो तो धनधान्य का विशेष सुख होता है और अनेक गुण विनोद मे समय यापन होता है॥१५९॥

अथ सर्वभावफलम्

शयनाद्येषु भावेषु यस्य तिष्ठति सद्ग्रहा ॥ नित्य तस्य शुभ ज्ञान निर्विशंक द्विजोत्तम ॥१६०॥ भोजनाद्येकभावेषु पापास्तिष्ठति सर्वथा ॥ तदा सर्वविनाशोऽपि नात्र कार्या विचारणा ॥१६१॥ निद्राया च यदा पापो जायास्थाने शुभ वदेत् ॥ यदि पापग्रहैर्दृष्टो न शुभ च कदाचन ॥१६२॥ सुतस्थाने स्थित पापो निद्राया शयनेऽपि वा ॥ तदा शुभ भवेत्तस्य नात्र कार्या विचारणा ॥१६३॥ मृत्युस्थानस्थित पापो निद्राया शयनेपि वा ॥ तदा तस्यापमृत्यु स्याद्राजत परतस्तथा ॥१६४॥ शुभग्रहैर्यदा युक्त शुभैर्वा यदि वीक्षित ॥ तदा च मरण तस्य गगाया च विशेषत ॥१६५॥ कर्मस्थाने यदा पाप शयने भोजनेऽपि वा ॥ तदा कर्मविपाक स्यान्नानादु खप्रदायक ॥१६६॥ दशमस्थो निशानाथ कौतुके च प्रकाशने ॥ तदैव राजयोग स्यान्निर्विशक द्विजोत्तम ॥१६७॥बलाबलविचारेण ज्ञायते च शुभाशुभम् ॥ एव क्रमेण बोद्धव्य सर्व भावेषु बुद्धिमन् ॥१६८॥

इति श्रीबृहत्पाराशरहोराशास्त्रेपूर्वखण्डे ग्रहावस्थाफलकथन
नाम त्रिशोऽध्याय समाप्त ॥३०॥

सर्वभावफल—ऊपर कहे गये भावफलो मे यदि शुभग्रहो का योग हो तो समय समय पर सद्बुद्धि होती रहती है॥१६०॥ भोजन अवस्था मे यदि पाप ग्रह हो तो सब प्रकार से विनाश ही होता है॥१६१॥ पापग्रह निद्रावस्था मे सप्तमभाव मे हो तो शुभफल होता है और यदि पापग्रह से दृष्ट हो तो शुभफल नही होता॥१६२॥ पापग्रह निद्रावस्था मे पचमभाव मे हो तो सन्तान के लिए शुभकारी है॥१६३॥ यदि अष्टम भाव मे पापग्रह निद्रावस्था मे हो तो जातक की अकाल मृत्यु राज के कारण या अन्य कारण से होती है॥१६४॥ यदि शुभ ग्रहों से युक्त या दृष्ट हो तो विशेष करके गगा मे डूबकर मृत्यु होती है॥१६५॥ यदि दशम् भाव मे पापग्रह शयन या भोजन अवस्था मे हो तो जातक को अनेक दु खो का सामना करना पडता है॥१६६॥ यदि चन्द्रमा दशमभाव मे कौतुक अथवा प्रकाश अवस्था मे हो तो नि सन्देह राजयोग कारक होता है॥१६७॥ इस प्रकार ग्रहो का बलाबल विचार करके शुभाशुभ फल का निर्देश करना चाहिये। और इसी क्रम से सभी भावो म विचार करना चाहिए॥१६८॥

इति श्री बृ० पा० हो० शा० पू० भा० प्र० ग्रहावस्था फलकथन
नाम त्रिशोऽध्याय ॥३०॥

मैत्रेय उवाच

दशा कतिविधा सति ह्येतन्मेब्रूहि तत्त्वत ॥ महर्षे त्व समर्थोसि कृपया करुणानिधे ॥१॥

पराशर उवाच

अथात सप्रवक्ष्यामि दशाभेदाननेकश ॥ विशोत्तरी दशा चोक्ता दशा तु षोडशोत्तरी ॥२॥

द्वादशोत्तरिका ज्ञेया तथैवाष्टोत्तरी दशा ॥ पंचोत्तरी दशा तद्वद्दशा शतसमा स्मृता ॥३॥ दशा हि चतुराशीति प्राह चाथ द्विसप्तति ॥ तथा षष्टिसमा चोक्ता दशा षड्विंशतिसमा ॥४॥ नवमांशनवदशा राश्यंशकदशा स्मृता ॥ दशा कालाभिधा चक्रदशाचक्र मुनीश्वरैः ॥५॥ चरपर्या दशा विप्र द्विजोत्तमदशा स्थिरा अथोत्तरदशा विप्र ब्रह्मता चापरा दशा ॥६॥ केन्द्राद्या च दशा ज्ञेया कारकादिग्रहा दशा ॥ माण्डूकी च दशा प्रोक्ता तथा शूलदशापि वा ॥७॥ योगार्द्धगा दशा विप्र दृग्दशा कथयाम्यहम् ॥ दशा त्रिकोणनाम्ना वै राशीना च दशा तथा ॥८॥ तारादशा तथा ज्ञेया दशा ज्ञेया च वर्णदा ॥ पंचस्वरदशा विप्र योगिनी च दशा स्मृता ॥९॥ तत पैण्ड्यदशा ज्ञेया तथांशी च दशा द्विज ॥ नैसर्गिकदशा विप्र अष्टवर्गदशा स्मृता ॥१०॥ सध्या दशा च ज्ञातव्या पाचका च दशा द्विज ॥ द्विचत्वारिंशद्भेदा स्यु कथयामि तवाग्रत ॥११॥

## अनेक दशाभेद कथन

मैत्रेय जी बोले–हे महर्षि! दशा कितने प्रकार की है यह आप कहिये क्योंकि हे करुणानिधि! इस विषय के कहने मे आप ही समर्थ है॥१॥ महर्षि पराशरजी ने कहा–अब हम अनेक दशा भिन्न भिन्न रूप से कहते हैं। विंशोत्तरी दशा तथा षोडशोत्तरी द्वादशोत्तरी अष्टोत्तरी, पंचोत्तरी, शताब्दिका, तथा चतुरशीति वर्षा, द्विसप्तति वर्षा षष्ठि समा, तथा षड्विंशति समा, नवमांश दशा, राश्यंश दशा तथा कालदशा कालचक्रदशा चरपर्यायदशा स्थिरदशा, ब्रह्मदशा, केन्द्रदशा, कारकदशा माण्डूकीदशा शूलदशा योगार्द्ध दशा दृग्दशा त्रिकोण दशा, राशि दशा, तारा दशा वर्णद दशा पंचस्वर दशा योगिनी दशा, पैण्डी दशा अंशी दशा, नैसर्गिक दशा, अष्टवर्ग दशा सध्या दशा पाचक दशा आदि ४२ प्रकार की दशा है। उनमे से कुछ प्रसिद्ध प्रसिद्ध दशा का विचार कथन करते है॥श्लोक २ से ११ तक॥

## अथ विंशोत्तरीदशामाह

आनयनप्रकार च श्रृणुष्व द्विजपुंगव ॥ नामनक्षत्रपर्यंतमाधार कृत्तिकादित ॥१२॥ वह्नात्स्वर्क्षपर्यन्त गणयेन्नवभिर्हरेत् ॥१३॥ सूर्येन्दुक्ष्माजतमसो वाक्पतिर्मंदचन्द्रजौ ॥ केतुशुक्रौ क्रमादेते विज्ञेयाश्च दशाधिपा ॥१४॥ रसाशामुनिधृत्यब्धा भूपतिर्धृतिवत्सरा ॥ सप्तेदवो नगा व्योमबाहवो भास्करादित ॥१५॥

## विंशोत्तरी दशा प्रकार

विंशोत्तरी दशा स्पष्ट करने का प्रकार यह है कि–कृत्तिका नक्षत्र से गणना करनी चाहिये॥१२॥ कृत्तिका से अपने नक्षत्र तक गणना करके अधिक हो तो ९ का भाग देना चाहिये॥१३॥ दशा के क्रम से स्वामी कहते है। सू० चं० मं० रा० बृ० श० बु० के० शु० । आई हुई सख्या के अनुसार स्वामी होता है॥१४॥ क्रम से वर्ष सख्या ६,१०,७,१८,१६ १९ १७,७ २० जानना॥१५॥

उदाहरण–कल्पना किया किसी का जन्म कृत्तिका नक्षत्र मे है, अत भयात १५।१० है भभोग ६०।३० है, पलमय भयात ९१० को सूर्य के वर्ष ६ से गुणा किया तो ५४६० हुए,

इसमे पलमय भभोग ३६३० का भाग दिया तो लब्धि १ वर्ष प्राप्त हुआ। शेष १८३० को १२ से गुणा किया तो २१९६० हुए, ३६३० का भाग दिया तो ६ मास लब्ध हुए, शेष १८० को ३० से गुणा किया तो ५४० हुए, ३६३० का भाग दिया तो ०० दिन प्राप्त हुआ, पुन ५४० को ६० से गुणा किया तो ३२४०० हुए, इसमे ३६३० का भाग दिया लब्ध ८ घटी प्राप्त हुई, शेष ३३६० को ६० से गुणा करके ३६३० के भाग से लब्ध ५५ पल प्राप्त हुए। इन वर्षादि सूर्य के वर्ष ६ मे घटाया तो ४।५।२९।५१।०५ यह भोग्य वर्षादि हुए।

**विशोत्तरीदशा मानचक्रम्**

| सू० | च० | म० | रा० | बृ० | श० | बु० | के० | शु० | ग्र० |
|---|---|---|---|---|---|---|---|---|---|
| ६ | १० | ७ | १८ | १६ | १९ | १७ | ७ | २० | वर्ष |
| कृ० | रो० | मृ० | आ० | पुन० | पु० | आ० | म० | पूफा | नक्षत्राणि |
| उफा | ह० | चि० | स्वा० | वि० | अनु० | ज्ये | मू० | पूषा | " |
| उषा | श्र० | ध० | श० | पूभा | उभा | रे० | अ० | भ० | " |

**विशोत्तरी दशाचक्रम्**

| सू० | च० | म० | रा० | बृ० | श० | बु० | के० | शु० | ग्र० |
|---|---|---|---|---|---|---|---|---|---|
| ४ | १० | ७ | १८ | १६ | १९ | १७ | ७ | २० | वर्ष |
| ५ | ० | ० | ० | ० | ० | ० | ० | ० | मा० |
| २९ | ० | ० | ० | ० | ० | ० | ० | ० | दि० |
| ५१ | ० | ० | ० | ० | ० | ० | ० | ० | घ० |
| ०५ | ० | ० | ० | ० | ० | ० | ० | ० | प० |

## विंशोत्तरीदशाचक्रम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| २०१४ | २०१८ | २०२८ | २०३५ | २०५३ | २०६९ | २०८८ | संवत् |
| ३ | ९ | ९ | ९ | ९ | ९ | ९ | राशि |
| ५ | ०४ | ४ | ४ | ४ | ४ | ४ | अंश |
| ८ | ५१ | ५१ | ५१ | ५१ | ५१ | ५१ | घटी |
| १३ | १८ | १८ | १८ | १८ | १८ | १८ | पल |

## अथ षोडशोत्तरीदशामाह

एकः पचयुती यदाधृत्यत बत्सरा क्रमात् ॥ रविभौमोगुरुमन्द केतुश्चन्द्रो बुधो भृगु ॥१६॥ अष्टौ दशाधिपा प्रोक्ता राहुहीना नवग्रहा ॥ पुष्यभाज्जन्मभ यावद्गणयेद्वसुभिर्हरेत् ॥१७॥ सूर्यहोरागते शुक्ले चन्द्रस्य कृष्णपक्षके ॥ तदा नृप फलार्थाय विचित्या षोडशोत्तरी ॥१८॥

### षोडशोत्तरी दशा प्रकार

षोडशोत्तरी दशा मे वर्ष संख्या ११ से १८ तक जानना और दशास्वामी सू० म० गु० श० के० च० बु० शु० होते हैं। ये आठ दशास्वामी ग्रह हैं॥१६॥ इन दशाधिपो मे राहुग्रह की गणना नही है। पुष्य नक्षत्र से जन्मनक्षत्र तक गिनकर आठ का भाग देना चाहिये॥१७॥ शुक्लपक्ष मे सूर्य की होरा और कृष्णपक्ष मे चन्द्रमा की होरा से विचार करे। इस प्रकार मनुष्यो का शुभाशुभ विचार षोडशोत्तरी दशा से करे॥१८॥

उदाहरण–पूर्वोदाहरण मे जन्मनक्षत्र कृ० पलमय भयात ९१० तथा भभोग ३६३० है। दशा बुध की है, अतः ९१० को बुध के वर्ष १७ से भयात ९१० को गुणा किया तो १५४७० हुए, इसमे भभोग ३६३० का भाग दिया तो लब्ध ४ वर्ष प्राप्त हुए, शेष ९५० को १२ से गुणा किया और ३६३० का भाग दिया तो ३ मास प्राप्त हुए और आगे भी क्रमशः ३०।६०।६० से गुण कर भभोग ३६३० के भाग से प्राप्त अंक दिन, घटी, पल प्राप्त ४।१४।१८ हुए, इस प्रकार ४।३।४।१४।१८ वर्षादि दशा का भुक्तमान प्राप्त हुआ, इसको बुध के मान १७ वर्ष मे घटाया तो १२।८।२५।४५।४२ यह बुध की भोग्य वर्षादि दशा हुई।

## षोडशोत्तरी दशामानम्

| सू० | म० | बृ० | श० | के० | च० | बु० | शु० | ग्र० |
|---|---|---|---|---|---|---|---|---|
| ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | व० |
| पु० | श्ले० | म० | पूफा | उफा | ह० | चि० | स्वा० | न० |
| वि० | अनु० | ज्ये० | मू० | पूषा | उषा | श्र० | ध० | न० |
| श० | पूभा | उभा | रे० | अ० | भ० | कृ० | रो० | न० |
| मृ० | आ० | पुन० | X | X | X | X | X | न० |

## षोडशोत्तरी दशा चक्रम्

| बु० | शु० | सू० | म० | बृ० | श० | के० | च० | ग्र० |
|---|---|---|---|---|---|---|---|---|
| १२ | १८ | ११ | १२ | १३ | १४ | १५ | १६ | व० |
| ८ | ० | ० | ० | ० | ० | ० | ० | मा० |
| २५ | ० | ० | ० | ० | ० | ० | ० | दि० |
| ४५ | ० | ० | ० | ० | ० | ० | ० | घ० |
| ४२ | ० | ० | ० | ० | ० | ० | ० | प० |
| २०१४ | २०२६ | २०४५ | २०५६ | २०६८ | २०८१ | | | संवत् |
| ३ | ०० | ० | ० | ० | ० | | | |
| ५ | ०० | ० | ० | ० | ० | | | |
| ८ | ५३ | ५३ | ५३ | ५३ | ५३ | | | |
| १३ | ५५ | ५५ | ५५ | ५५ | ५५ | | | |

### अथ द्वादशोत्तरीदशामाह

सूर्यो गुरुः शिखी ज्ञोऽसुः कुजो मन्दो निशाकरः ॥ शुक्रहीना दशा ह्येतद्वि वयात्साप्तमात्समाः ॥१९॥ जन्मभात्पौष्णपर्यन्तं गणयेदष्टभिर्भजेत् ॥ नवमांशे यदा जाता शुक्रस्य द्वादशोत्तरी ॥२०॥

### द्वादशोत्तरी दशा

स्वामी ग्रह सू०७ गु०९ के०११ बु०१३ रा०१५ म०१७ श०१९ च०२१ इनमे शुक्र ग्रह को छोड कर बाकी ग्रहो को सात से २-२ बढाकर वर्ष सख्या की दशा जानना॥१९॥ जन्म नक्षत्र से रेवती नक्षत्र तक गणना करके ८ का भाग दे, शेष सख्या की दशा जाने, शुक्र के नवाश मे जन्म हो तो द्वादशोत्तरी का विचार करे॥१९॥२०॥

| द्वादशोत्तरी दशा क्रम चक्रम् | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सू० | बृ० | के० | बु० | रा० | म० | श० | च० | ग्रहा |
| ७ | ९ | ११ | १३ | १५ | १७ | १९ | २१ | वर्षाणि |

उदाहरण–भयात भभोग से पूर्ववत् दशा स्पष्ट करना।

### अथाष्टोत्तरीदशामाह

सूर्यश्चन्द्रः कुजः सौम्यः शनिर्जीवस्तमो भृगुः ॥ एते दशाधिपाः प्रोक्ता विना केतु नवग्रहा ॥२१॥ रसाः पञ्चेन्दवो नागाः शैलचन्द्रा नभेन्दवः ॥ गोऽब्धाः सूर्यकुनेत्राश्च समाः प्रद्योतनादयः ॥२२॥ लग्नेशात्केन्द्रकोणस्थे राहौ लग्ने स्थित विना ॥ अष्टोत्तरी द्विधा प्रोक्ता शिवाद्या कृत्तिकादितः ॥२३॥ चतुष्कं त्रितयं तस्माच्चतुष्कं त्रितयं पुनः ॥ यावत्स्वजन्मभं तावद्गणयेच्च यथाक्रमम् ॥२४॥

### अष्टोत्तरी दशा

सूर्य, चन्द्र, मगल, बुध, शनि, गुरु, राहु, शुक्र ये ग्रह केतु के बिना दशास्वामी है॥२१॥ तथा इनके वर्ष–सू०६ च०१५ म०८ बु०१७ शनि १० गुरु १९ राहु १२ शुक्र २१ क्रम से है॥२२॥ लग्नेश से राहु लग्न को छोडकर केन्द्र या त्रिकोण स्थान मे हो तो अष्टोत्तरी दशा ग्रहण करना॥ अष्टोत्तरी की गणना दो प्रकार की होती है, एक आर्द्रा से दूसरी कृत्तिका से॥२३॥ कथित नक्षत्र से जन्म नक्षत्र तक गणना करो प्रथम पर्याय मे ४ नक्षत्र, दूसरे मे तीन, पुनः ४ और पश्चात् ३, इसी प्रकार जन्म नक्षत्र तक गणना करनी चाहिये॥२४॥ (चक्र मे स्पष्ट समझना)

विशेष-**"दशामानं चतुर्धा च त्रिधा चैव पुनःपुनः । अशुभानां शुभानाञ्च ग्रहाणां साधयेद्बुध!"** अर्थात् पापग्रहोके दशा वर्षके ४ भाग करके प्रति नक्षत्र १ भाग तथा शुभग्रहो के ३ भाग करके प्रतिनक्षत्र १ भाग दशामान ग्रहण करना। इस प्रकार जन्म नक्षत्र का जो मान प्राप्त हो उससे पूर्ववत् भयात भभोग से दशास्पष्ट करना चाहिए। तथा उत्तराषाढ का चतुर्थ चरण और श्रवण का १५ वाँ भाग 'अभिजित्' नक्षत्र माना गया है, अत. उत्तराषाढ के ३ चरण को ही भभोग मानना और श्रवण के आदि के १५वें भाग रहित को भभोग मानना तथा उत्तराषाढ का चतुर्थ चरण और श्रवण के १५वे भाग को मिलाकर अभिजित नक्षत्र का भभोग मानना। और इस भभोग के अनुसार ही भयात स्पष्ट करके दशा का साधन करना चाहिये।।२४।।

| अथाष्टोत्तरीदशायन्त्रम् | | | |
|---|---|---|---|
| सू० म०<br>७२ | चं० भा० म०<br>१८० | मं०<br>९५ | बुध<br>२५४ |
| ६ | १५ | ८ | १७ |
| आ० १८<br>पु० १८<br>पु० १८<br>आ० १८ | म० ६०<br>पू० ६०<br>उ० ६०<br>० ० | ह० २४<br>चि० २४<br>स्वा० २४<br>वि० २४ | अ० ६८<br>ज्ये० ६८<br>मू० ६८<br>० ० |
| श० १२० | बृ० २२८ | रा० १४४ | शु० २५२ |
| १० | १९ | १२ | २१ |
| पू० ३०<br>उ० ३०<br>अभि० ३०<br>श्र० ३० | ध० ७६<br>श० ७६<br>पू०भा० ७६<br>० ० | उ० ३६<br>रे० ३६<br>अ० ३६<br>भ० ३६ | कृ० ८४<br>रो० ८४<br>मृ० ८४<br>० ० |

उदाहरण–कल्पना किया कि–किसी जातक का जन्म उत्तराषाढ के द्वितीय चरण मे है, और भयात ३०।५ है, तथा भभोग ६०।४० है तो यहा पर अभिजित् के भाग के नाम का चतुर्थांश १५।१० घटाया तो शेष ४५।३० यह उत्तराषाढ का भभोग हुआ और भयात वही ३०।५ है। इसके पलात्मक १८०५ को शनिदशा के द्वितीय नक्षत्र (ऊपर चक्र मे देखिये) के मान ३०

(मास) से गुणा किया तो ५४१५० हुए, इससे १४।५२।३६ मासादि प्राप्त हुए। यह उत्तराषाढ का भुक्तमान हुआ। इसको ३० (मास) मे घटाया तो १५।७।२४ यह उत्तराषाढ का भोग्य मान हुआ, इसमे अभिजित् और श्रवण के मान ३०–३० मास का योग किया तो ७५।७।२४।०० हुआ मास संख्या मे १२ का भाग दिया तो ६।३।७।२४।०० यह शनि की भाग्य दशा हुई।

विशेष सूचना–केवल अष्टोतरी और षष्ठयन्दिका दशामे अभिजित् की गणना है। अत उषा अभि और श्रवण का भभोग मान पूर्वोक्त रीति से ग्रहण करना। अन्य नक्षत्रो मे नक्षत्र के पूर्ण भभोग तथा भयात से विशोत्तरी के समान ही दशा साधन करना किन्तु दशा मान ऊपर चक्र मे लिखे अनुसार पापग्रह का १/४ और शुभग्रह का १/३ पूर्ण भभोग के लिये ग्रहण करना चाहिए,भुक्त नक्षत्र के मान को छोडकर भोग्यनक्षत्रके मानका योग करके भोग्यदशा साधन करना।

| अष्टोत्तरी दशा चक्रम् | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| श० | गु० | रा० | शु० | सू० | च० | भ० | बु० | |
| ६<br>३<br>७<br>२४<br>०० | १९<br>०<br>०<br>०<br>० | १२<br>०<br>०<br>०<br>० | २१<br>०<br>०<br>०<br>० | ६<br>०<br>०<br>०<br>० | १५<br>०<br>०<br>०<br>० | ८<br>०<br>०<br>०<br>० | १७<br>०<br>०<br>०<br>० | व०<br>मा०<br>दि०<br>घ०<br>प० |
| २०१४ | २०२० | २०३९ | २०५१ | २०७२ | २०७८ | | | सम्वत् |
| १<br>५<br>८<br>१५ च | ६<br>१२<br>३१<br>२५ | ६<br>१२<br>३२<br>१५ | ६<br>१२<br>३२<br>१५ | ६<br>११<br>३२<br>१५ | ६<br>१२<br>३२<br>२५ | | | रा<br>अ<br>क<br>वि |

## अथ पचोत्तरीदशामाह

तम्रो विनानुराधादि विज्ञेय जन्मभावधि ॥ गणयेत्सप्तभिर्भक्ते शेषे कल्प्या दशा शुभा ॥२५॥ रविर्ज्ञार्किमुतौ भौमो भार्गवो रजनीकर ॥ वाचस्पतिश्च कर्कांगे तस्यैव द्वादशांगके ॥२६॥ पचोत्तरी दशा चित्या द्वाब्दाद्या क्रमात्समा ॥ बलाबलविवेकेन यथान्यायेन योजयेत् ॥२७॥

## पचोत्तरी दशा

जिस जातक के बृहस्पति कर्कराशि मे तथा कर्क के द्वादशांश मे हो उसके लिए इस पचोत्तरी दशा का विचार करना चाहिए। अनुराधा नक्षत्र से जन्म नक्षत्र तक गणना करना।

## अथ द्विसप्ततिकां दशामाह

लग्नेशे सप्तमे यत्र लग्ने वै मदनाधिपे ॥ चिंतनीया दशा तत्र द्व्यधिकाः सप्ततिः समाः ॥३३॥ नव वर्षाणि सर्वेषां विकेतूनां महात्मनाम् ॥ मूलाज्जन्मर्क्षपर्यन्तं गणयेदष्टभिर्हरेत् ॥ शेषा दशा विचिंत्या च वदेच्चैव महामुने ॥३४॥

### अथ द्विसप्ततिकादशायन्त्रम्

| र० | च० | म० | बु० | बृ० | शु० | श० | रा० | ग्रहा. |
|---|---|---|---|---|---|---|---|---|
| ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | वर्षाणि |
| मूल० | पूर्वाषा० | उत्तरा० | श्रवण० | धनिष्ठा० | शत० | पूर्वाभा० | उ०भा० | न- |
| रेवती | अश्वि० | भरणी | कृत्ति० | रोहिणी | मृग | आर्द्रा | पुनर्वसु | क्ष- |
| पुष्य | आश्ले० | मघा | पूर्वा | उत्तरा | हस्त | चित्रा | स्वाती | त्रा- |
| विशा० | अनुरा० | ज्येष्ठा | ० | ० | ० | ० | ० | णि |

**द्विसप्ततिका दशा**

जिस जातक के लग्नेश सप्तमभाव मे अथवा सप्तमेश लग्न मे हो उसके लिए ७२ वर्ष की दशा का विचार करना चाहिए।।३३।। केतु को छोडकर क्रम से सूर्यादि ग्रह दशास्वामी हैं। सबके ९-९ वर्ष हैं। मूलनक्षत्र से जन्मनक्षत्र तक गणना करके ८ का भाग देना। शेष संख्या से दशा जानना।।३४।।

उदाहरण–किसी का जन्म श्रवण नक्षत्र मे है तो बुध की दशा हुई, अतः श्रवण का भयात भभोग स्पष्ट करके विंशोत्तरी दशा के समान ही दशा स्पष्ट करनी चाहिए।

## अथ षष्टिहायनीदशामाह

गुर्वर्कभूसुतानां च वर्षाणि दशकानि च ॥ ततः शशिजशुक्रार्कपुत्रागूनां समाश्च षट् ॥३५॥ दास्रात्त्रयं चतुष्कं च त्रयं वेदं पुनः पुनः ॥ यदैको लग्नराशीशश्चिन्त्या षष्टिसमा तदा ॥३६॥

**षष्ठिहायनी दशा**

गुरु, सूर्य, मंगल, चद्रमा, बुध, शुक्र, शनि, राहु ये दशा स्वामी तथा वर्षसंख्या क्रम से १०-१०-१०-६-६-६-६-६ जानना।।३५।। अश्विनी नक्षत्र से ३-४-३-४ आदि क्रम से पुन

पुन. दशा की गणना करना। लग्न की राशि तथा चन्द्र राशि एक ही हो उस जातक के लिए इस दशा का उपयोग है॥३६॥

सूचना–इस दशा की वर्षसंख्या भी अष्टोतरी दशा के समान तीन या चार नक्षत्रो पर विभाग करके १-१ भाग १-१ नक्षत्र का जानना। जिस ग्रह के तीन नक्षत्र हों, उसकी दशा के तीन करना, जैसे–बुध के तीन नक्षत्र है तो उसके ६ वर्षो के ३ भाग २–२ वर्ष के १-१ नक्षत्र के जानना। और ४ नक्षत्र हो तो ४ भाग करना, जैसे सूर्य के ४ नक्षत्र हैं तो दशा वर्ष १० के भाग २॥-२॥ वर्ष १-१ नक्षत्र के समझना।

उदाहरण–जैसे किसी का जन्म नक्षत्र स्वाती है तो बुध की दशा हुई, और स्वाती नक्षत्र का भयात भभोग क्रमशः२०।००और ६०।०० है, तो स्वामी के २ वर्ष सख्या से भयात के पलाक को गुणा कर भभोग के पलाक का भाग देने से लब्ध भुक्त ०।८।०।०।० को २वर्षमे घटाया तो १।४।०।०।० हुआ, इसमे विशाखा के २ औरअनुराधा के २वर्ष युक्त किये तो ५।४।०।०।० हुए।

| अथ षष्टिहायनीदशायंत्रम् | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सू० | र० | मं० | चं० | बु० | गु० | श० | रा० | ग्रहाः |
| १० | १० | १० | ६ | ६ | ६ | ६ | ६ | वर्षाणि |
| अश्वि भरणी कृत्ति | रोहिणी मृग आर्द्रा पुनर्वसु | पुष्य आश्ले० मघा | पूर्वा उ०फा० हस्त चित्रा | स्वाती विशा० अनुरा | ज्येष्ठा मूल पूर्वाषा उत्तरा | अभिजि श्रवण धनि | शत पूर्वाभा उत्तरा रेवती | न क्ष० त्रा० णि |

## अथ षट्त्रिंशत्कांदशामाह

श्रवणाज्जन्मभं यावद्गणयेदष्टभिर्भजेत् ॥ शेषांकाच्चन्द्रार्कसुरेज्यारजार्कज्ञौ शुक्रराहवः ॥३७॥ एकोद्यं च मतश्चैकाद्वर्षाण्येषां क्रमात्स्मृताः ॥ दिवसे सूर्यहोरायां चिंत्या वै षट्त्रिंशाब्दिका ॥३८॥ रात्रौ चांद्रादष्टतष्टाद्रेकात्स नृपजन्मभात् । सूर्येन्दुभूमिजनिशाधीशपुत्रसुरेज्यका: ॥३९॥ भृगुमंदागुशिखिनो लग्नस्याच्चिन्तिता दशा ॥४०॥ खेटक्रमाद्दशा चिंत्या यदा लग्ने शनिः स्थितः ॥ क्वचिद्ग्रहस्तदानीं च न चिंत्या बहुतो बलात् ॥४१॥

### ३६ षट्त्रिंशद् वर्षा दशा

श्रवण नक्षत्र से जन्मनक्षत्र तक गणना करके ८ का भाग दे, शेष अंक से क्रम से च०, सू०, बृ०, म०, बु०, श०, शु०, रा०॥३७॥ वर्ष सख्या क्रम से १,२,३,४,५,६,७,८, जानना। दिन मे जन्म हो तो सूर्य की होरा से विचार करे और इस ३६ वर्षवाली दशा का उपयोग करे॥३८॥

रात्रि मे जन्म हो तो उपर्युक्त प्रकार से दशा नक्षत्र लेकर दशास्वामी सूर्य, चन्द्र मगल बुध गुरु, शुक्र, शनि, राहु, इस क्रम से ग्रहण करना॥३९॥ लग्न मे स्थित ग्रह से दशा का आरम्भ करे॥४०॥ तथा सूर्यादि क्रम से जो वर्ष ऊपर कहे है वे ही देना। यदि लग्न मे शनि हो तो इस दशा का विचार करना। और यदि लग्न मे दूसरा बलवान ग्रह स्थित भी हो तो भी शनि को ही ३६ वर्षो दशा लेने मे कारण माना जाता है। दूसरे ग्रह के कारण दशा का त्याग नही होता है॥४१॥

इसका उदाहरण विशोत्तरी दशा के समान ही जानना।

| अथ षट्त्रिशत्यब्दिकादशायन्त्रम् | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| च० | सू० | बृ० | म० | बु० | श० | शु० | रा० | ग्रहा |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | वर्षाणि |
| श्र० | ध० | श० | पू०भा० | उ०भा० | रे० | अश्वि० | भर० | न |
| कृ० | रो० | मृ० | आ० | पुन० | पुष्य | आश्ले० | मघा | क्ष |
| पू० | उ० | ह० | चि० | स्वा० | वि० | अनु० | ज्येष्ठा | त्रा |
| मू० | पू०षा० | उ०षा० | ० | ० | ० | ० | ० | णि |

## अथ नवमांशनवदशामाह

अथ राशिक्रम वक्ष्ये शृणुष्व द्विजपुगव ॥ ग्रहे राश्यादिके चाल्पे दशा तस्यादिमा भवेत् ॥४२॥ ततस्तदधिकस्यैव तुल्ये नैसर्गिकाद्बलात् ॥ राशीशात्सप्तमागेशार्च्चित्या राशिक्रमाद्दशा ॥४३॥ यस्मिन्नवाशकस्यैके दशा तस्यादिमा मता ॥ अप्रादब्जाच्च ये खेटा केन्स्थता सस्थिता क्रमात् ॥४४॥ दशामान प्रवक्ष्यामि यथोक्त ब्रह्मणा पुरा ॥ लिप्तीकृत्वा ग्रह सोमखाब्धिभिर्भाजिते फलम् ॥४५॥ पुन सूर्ये हृते लब्ध समाद्याशकला दशा ॥ सर्वेषा मानवाना च दशास्त्वेता विचितयेत् ॥४६॥

### नवांश नवदशा

हे द्विजश्रेष्ठ! अब हम नवांश दशा का राशिक्रम कहते है आप श्रवण करे। प्रथम ग्रहदशा कहते है। ग्रहो मे–सबसे कम राशि अश वाले की दशा प्रथम होती है इन दशाओ का विस्पष्ट विवरण इस प्रकार जानना–

**दशा संख्या** **विवरण**

प्रथम–जो ग्रह राशि अंश, कला, विकला में सबसे कम हो उसकी दशा प्रथम होगी तथा बाद उससे अधिक वाले की और बाद उससे अधिक राश्यादिवाले की। इसी प्रकार ९ ग्रहों में दशा जानना। यदि दो ग्रहों में राश्यादि समान हो तो नैसर्गिक बल से निर्णय करना।

द्वितीय–जो ग्रह सबसे अधिक राश्यादि हो, उसकी सर्वप्रथम तथा उसके बाद उससे कम और उसके बाद उससे कम, इसी प्रकार ९ ग्रहों की दशा होगी। राश्यादि समान होने पर नैसर्गिक बल से निर्णय करें।

तृतीय–नैसर्गिक बल से जिसका बल सबसे कम हो उसकी दशा सबसे प्रथम होगी। बाद उससे अधिक बल की, उसके बाद उससे अधिक बल की। इसी प्रकार आगे भी जानना। (यहां "तुल्ये नैसर्गिकाद् बलात्' इस पद की आवृत्ति होती है। जिससे पिछली दो दशाओं में तो राश्यादि समान होने पर नैसर्गिक बल से यह अर्थ प्राप्त होता है। और तीसरे पर्याय में स्वतन्त्ररूप से दशाक्रम का बोधक होता है।) यह तीन ग्रह दशा है। इनमें वर्ष संख्या प्रत्येक दशा में १२ वर्ष जानना।

चतुर्थ–जन्मराशि के स्वामी से प्रथम दशा। अर्थात् जन्मराशि की प्रथम दशा बाद राशिक्रम से दशा जानना। जैसे जन्म राशि मेष है तो मेष, वृष, मिथुन इसी प्रकार से आगे भी। इसमें प्रति राशि दशा में वर्ष संख्या ९ लेना। यह सब दशाएं १०८ वर्ष की होने से।

पंचम भेद–लग्न से सप्तमेश की राशि से दशा जानना। क्रमराशि से ही जानना। यथा सप्तमेश राशि तुला है तो तुला, वृश्चिक, धनु, मकर आदि।

षष्ठ भेद–लग्नेश की प्रथमदशा, बाद द्वितीयेश की, तब तृतीयेश की, बाद चतुर्थेश की, पश्चात् पंचमेश की, इसी प्रकार आगे भी जानना। (यहां ग्रहों में ७ ग्रह ही लेना। राहु केतु की राशीशिता नहीं है अतः उनका ग्रहण नहीं है। वर्ष संख्या ९–९ लेना।)

सप्तम भेद–लग्न में जो नवांश हो उसके स्वामी से आरंभ करके राहु केतु सहित सूर्यादि ग्रहों के नैसर्गिक क्रम से ९ ग्रहों की दशा जानना। वर्ष संख्या १२–१२ लेना।

अष्टम भेद–सप्तम भेद में जो नवांशेश से दशा ली है उससे नवम नवांश के स्वामी से यथाक्रम दशा जानना, ग्रहों में गणना नैसर्गिक क्रम से। वर्ष संख्या १२–१२।

नवम भेद–चन्द्रमा से दशा जानना। शेष पूर्ववत् ॥४२–४४॥

स्पष्ट आयु निकालना–जैसा कि पहले ब्रह्माजी ने कहा है सो कहते हैं। चन्द्रमा के स्पष्ट राश्यादि को लेकर कलात्मक करें। (राशिको ३० से गुणा कर अंश जोड़ना, पश्चात् अंशादि में ६० से गुणा करके घटी युक्त करना तो कलात्मक चन्द्र होगा) फिर २० का भाग देकर लब्ध अंक में १२ का भाग देने से जो अंक वर्ष, मास, दिन आदि प्राप्त हो उनको १०८ परमायु में घटाना जो शेष रहे वह स्पष्ट वर्ष, मास आदि जातक की आयु जानना। सभी मनुष्यों में यह प्रयोग आयुमान के लिये करना चाहिए॥४५॥४६॥

उदाहरण–कल्पना की कि किसी जातक के जन्मकाल में चन्द्रस्पष्ट ८।२५।२१।३८। है तो

इसकी कलात्मक सख्या १५९२९।३८ हुई। इसमे २० का भाग दिया तो लब्ध ७९६।९ पुन १२ का भाग दिया तो ६६।३१।१८ प्राप्त हुआ। इसको १०८ वर्ष मे घटाया तो ४१।७।२८।५२ यह आयु का वर्षादि मान स्पष्ट हुआ।।

## अथ राश्यंशकदशामाह

तन्वादिभावाः संस्पष्टाः प्रोक्तमार्गेण चानयेत् ॥ लग्नेशांशस्थितो यत्र दशास्तस्य इमाः स्मृताः ।।४७।। द्वितीयेशादितश्चापि ज्ञेया राश्यंशका दशा ॥ चिन्त्या लग्ने बलवति लग्नेशे वा बलान्विते ।।४८।।

## अथ कालदशामाह

संध्या पंचघटी प्रोक्ता दिनषष्ठ्यंशनाडिका ॥ सूर्यबिंबार्द्धतःपूर्वं परस्तादुदयादपि ।।४९।। संध्याद्वयं च विंशत्या घटिकाभिः प्रकीर्तितम् ॥ दिनस्य विंशतिर्मध्यः पूर्णसंज्ञा उदाहृताः ।।५०।। निशाया मुग्धसंज्ञाश्च घटिका विंशतिश्च याः ॥ सूर्योदयस्य या सध्या खण्डाख्या दशनाडिकाः ।।५१।। अस्तकालस्य या सध्या सुधाख्या दश नाडिकाः ॥ पूर्णमुग्धे गतघटी षड्गुणे नवधा लिखेत् ।।५२।। तथा खण्डसुधाभूर्ये हते तु नवधा लिखेत् ॥ विभक्तार्नौत्रियुगैर्मानाख्यानफलानि च ।।५३।। क्रमात्सूर्यादिकाना वै मानमुक्तं मुनीश्वरैः ॥ स्वस्वमानं स्वसख्याभिर्गुणिते स्युः समादयः ।।५४।।

### राश्यंशक दशा

पहले कही हुई रीति से लग्न आदि १२ भाव स्पष्ट करे। लग्नेश का नवाश जिस भाव मे हो वहा से दशा का आरभ करना।।४७।। इसी प्रकार आगे भी द्वितीयादि भावो के अधिपति से दशा रखना। यह दशा जहा लग्न या लग्नेश बलवान हो वहा प्रयुक्त करना।।४८।।

### काल (होरा) दशा

यहा दिन शब्द से अहोरात्र का ग्रहण है। अहोरात्र मान ६० घटी का होता है। उसमे सूर्य के अर्द्धोदय काल से ५ घटी तक सध्या (औदयिकी सध्या) होती है और इसकी 'खण्डा' सज्ञा है। इसी प्रकार सूर्यास्त से पूर्व की भी ५ घटी सध्या काल है और उसकी 'मुग्धा' संज्ञा है। इस प्रकार सूर्यास्त (अर्द्धास्त) से पहिले की ५ घटी और बाद की ५ घटी सध्या काल है। इस तरह प्रात की १० घटी पूर्वापर की 'खण्डा' 'और अस्तकाल की पूर्वापर की १० घटी 'सुधा' नाम की सध्या है। और दिन की बाकी २० घटी की 'पूर्णा' सज्ञा है। तथा रात्रि की बाकी २० घटी की 'मुग्धा सज्ञा है। यदि 'पूर्णा' नामक दिन की २० घटी मे जन्म हो तो (अर्थात् सूर्योदय से इष्टकाल यदि ५ घटी से अधिक हो तो प्रात सध्या (खण्डा) की ५ घटी इष्ट मे से घटा कर बाकी) ६ से गुणा करना। इसी प्रकार रात्रि की 'मुग्धा' नाम की मध्य घटी मे जन्म हो तो सध्याकाल की घटी घटाकर बाकी को ६ से गुणा करना। यदि 'खण्डा या 'सुधा' नाम की सध्या मे जन्म हो तो इष्ट घटी को १२ से गुणा करना। गुणित अक को ९ स्थान मे रखना।

और सब जगह अलग ४५ का भाग देना तो लब्ध दशा मान का ध्रुवाक होगा। इसको सूर्यादि ग्रहो की सख्या (सू०१, च०२, म०३, बु०४, गु०५, शु०६, श०७, रा०८, के०९) से गुणा करने से सूर्यादि ग्रहो की वर्ष, मास आदि दशा स्पष्ट होगी॥४९-५४॥

उदाहरण–इष्ट ८।१६ मे प्रात सध्या की ५ घटी कम करने से शेष ३।१६ को ६ से गुणा किया तो १९।३६ हुआ, इसमे ४५ का भाग दिया तो ००।२६।०८।०।०, इस सूर्यादि ग्रहो की क्रम सख्या से गुणा करके दिनो मे ३० और मास सख्या मे १२ का भाग देने से नीचे चक्र मे दिखाई हुई सूर्यादि दशा प्राप्त होगी।

**अथ कालचक्रमहादशायन्त्रम्**

| सू० | च० | म० | बु० | गु० | शु० | श० | रा० | के० |
|---|---|---|---|---|---|---|---|---|
| २<br>२<br>८<br>०<br>१० | ४<br>४<br>१६<br>०<br>० | ६<br>६<br>२४<br>०<br>० | ८<br>९<br>२<br>०<br>० | १०<br>११<br>१०<br>०<br>० | १३<br>१<br>१८<br>०<br>० | १५<br>३<br>२४<br>०<br>० | १७<br>६<br>४<br>०<br>० | १९<br>८<br>१२<br>०<br>० |
| १९<br>०० | १९<br>०३ | १९<br>०७ | १९<br>१३ | १९<br>२२ | १९<br>३२ | १९<br>४५ | १९<br>६१ | १९<br>७८ |
| १७<br>६५ | १७<br>६८ | १७<br>७२ | १७<br>७८ | १७<br>८७ | १७<br>९८ | १८<br>११ | १८<br>२७ | १८<br>४४ |
| १०<br>४<br>१४<br>२२ | ०<br>१२<br>१४<br>२२ | ४<br>३८<br>१४<br>२२ | ११<br>३२<br>१४<br>२२ | ८<br>३४<br>१४<br>२२ | ८<br>४<br>१४<br>२२ | १<br>३२<br>१४<br>२२ | १<br>१८<br>१४<br>२२ | ७<br>४२<br>१४<br>२२ |

## अथ कालचक्रदशामाह

कालचक्र प्रवक्ष्यामि नराणा हितकाम्यया ॥ यावद्देहादिजीवान्तमिति चक्रस्य निर्णय ॥५५॥
सप्तविंशतिऋक्षाणि अनुलोमविलोमत ॥ वक्ष्येऽहं वै तवाग्रे च अश्विन्यादि यथाक्रमम् ॥५६॥
द्वे द्वे रेखात्मके चक्रे चतुष्कोण लिखेत् क्रमात् ॥ द्वादशगृहनिर्माणं मेषादिद्वादश न्यसेत् ॥५७॥
ईशान्यादिक्रमेणैव मीनान्त द्वादश न्यसेत् ॥ एव क्रमेण चक्र तद्विलिखेद्द्विजनदन ॥५८॥

द्वादशारं लिखेच्चक्रं तिर्यगूर्ध्वं समानकम् ॥ गृहाणि द्वादशैवं स्युस्सव्येषु च यथाक्रमम् ॥५९॥ द्वितीयादिषु कोष्ठेषु राशीन्मेषादिकान्यसेत्॥ एवं द्वादशराश्याख्यं कालचक्रमुदीरितम् ॥६०॥ अश्विन्यादित्रयं चैव सव्यमार्गे प्रतिष्ठितम् ॥ तिस्रोऽपसव्यास्स्युस्तारा रोहिण्याद्या यथाक्रमम् ॥६१॥ कालचक्रदशासव्यापसव्यमार्गमग्रे स्फुट वक्ष्यति ॥

कालचक्रदशा

कालचक्र नामक दशा का पूर्ण विवरण आगे कहेंगे जिससे मनुष्यों का बड़ा हित होता है। देहग्रह से जीवग्रह पर्यन्त उसका भोग (दशा) होता है, यह उस चक्र में निर्णय किया गया है॥५५॥ २७ नक्षत्र क्रम से तथा व्युत्क्रम से (सीधे और उलटे क्रम से गणना होना) अश्विनी आदि नक्षत्र उसमें रखे गये है॥५६॥ दो दो रेखा सीधी और तिरछी बनाकर उनके कोणों मे १-१ रेखा करके बारह घर का निर्माण करें, इन घरों मे १२ राशियां रखें॥५७॥ अश्विनी आदि नक्षत्र और मीन पर्यन्त राशि लिखें। हे द्विजनन्दन! इस प्रकार लिखें॥५८॥ अथवा बारह कोठो का गोल चक्र लिखें, पूर्वोक्त रीति से तिरछी और सीधी रेखा करने से १२ कोष्ठक होंगे॥५९॥ दूसरे ऊपर के कोष्ठक में १२ मेषादि राशि लिखें। इस प्रकार १२ राशियों का कालचक्र नामक चक्र कहा है॥६०॥ अश्विनी आदि ३ नक्षत्र सीधे क्रम से, उसी क्रम से रोहिणी आदि तीन नक्षत्र उलटे क्रम से रखें॥६१॥ इसका विशेष विवरण आगे कहेंगे।

कालचक्रम्



## अथ चक्रदशामाह

राशीभिराद्दशा ज्ञेया सूर्यादीना क्रमात्पुनः ॥ दिवा रात्रिस्तथा सन्ध्या त्रिकाले त्रिविधा दशा॥६२॥ चक्राख्या च दशा प्रोक्ता तथाग्रे द्विजनन्दन ॥ लग्नस्यस्य दशा चादौ ततो वित्तस्थितादयः ॥६३॥ त्रियादयो यदैकस्थास्तदा भागादयोऽधिकात् ॥ तत्रापि तुल्यौ नैसर्गाद्बलात्सूर्योऽधिकस्य च ॥६४॥ राशिप्रमितवर्षाणि भागाद्यान्यपथाततः ॥ भावानामपि लग्नाच्च वर्षाणि दिङ्मितानि च ॥६५॥

चक्रदशा

यह चक्रदशा दिन, रात्रि, सन्ध्या इन ३ समयों में भिन्न भिन्न प्रकार से होती है। दिन में जन्म हो तो जातक की राशि के स्वामी की राशि से दशा आरंभ होती है॥६२॥ यह दशा 'चक्रदशा' नाम की है और रात्रि में जन्म हो तो जन्मलग्न से दशा आरंभ होती है तथा सन्ध्याकाल में जन्म हो तो द्वितीयभाव से आरंभ होती है॥६३॥ तीनों प्रकार के स्वामी तथा राशि एक ही स्थान में हों या दो प्रकार एक स्थान में हों तो अंशाधिक्य से निर्णय करना। और अंशादिक भी समान हों तो नैसर्गिक बल से निर्णय करना। वह भी समान होने पर सूर्य

### देह जीव फल

देह राशि और जीव राशि में सूर्य मंगल शनि राहु, केतु में से एक एक ग्रह भी यदि हो तो मरण होता है। अनेक ग्रह यदि देह जीवराशि में हो तो क्या कहना।।४६।। देहराशि में पापग्रह हो तो महाकष्ट होता है। जीव राशि में पापग्रह हो तो उसकी (उस ग्रह की) दशा में मृत्यु होती है।।४७।। किसी एक ग्रह द्वारा देह जीव से योग हो तो उसकी दशा में मृत्यु होती है।।४८।। जीवराशि में गुरुराशि तथा राहु वक्री शनि सूर्य हो तो मृत्युयोग जानना और उस दशारम्भ काल में यथाविधि शान्ति करना चाहिए।।४९।। जीवराशि में गुरु हो और चन्द्रराशि हो। एवं बुधराशि में गुरुशुक्र हो तो सौख्य होता है तथा रोग और शत्रु का नाश होता है।।५०।। देह जीवराशि में पापग्रह का योग होने से दु:खदायक और शुभयोग होने से शुभ होता है।।५१।। देहराशि में शुभग्रह हो तो भूषण आदि की प्राप्ति होती है। जीव राशि में शुभग्रह हो तो स्त्री पुत्रादि की प्राप्ति होती है।।५२।।

## अथ गतिप्रकरणमाह

प्रथमे गतिर्मंडूकी द्वितीये मर्कटी तथा ।। बाणायनवपर्यंतं गतिः सिंहावलोकनम् ।।५३।।

### गति प्रकरण

प्रथम माडूकी और दूसरी मर्कटी गति तथा तीसरी ५।९।११ तक की सिंहावलोकन गति होती है।।५३।।

## अथ फलमाह

मंडूके तु महाव्याधिर्मर्कट्या तु महद्भयम् ।। सिंहावलोके मरणं गर्गस्य वचनं यथा ।।५४।।

### गतिफल

माडू की गति महाव्याधि दायिनी होती है। मर्कटी गति में महाभय और सिंहावलोकन गति में मरण होता है। यह गर्गजी का वचन है।।५४।।

## सिंहावलोकनगतिमाडूकीगतिफलान्याह

कन्यायां कर्कटे वापि सिंहके मिथुनेपि च ।। माण्डूकीगतिसंज्ञो वै तादृशं रोगकारणम् ।।५५।। मीने तु वृश्चिके वापि चापे मेषस्तथैव च ।। सिंहावलोकनं चैव तादृशं च फलं लभेत् ।।५६।। सिंहावगतिमार्गे च मांडूकीगतिसंभवः ।। अपमृत्युकरस्तस्य प्रायश्चित्तेतिशोभति ।।५७।। मीने

तु वृश्चिके याते ज्वरो भवति निश्चितम् ॥ कन्याया कर्कटे याते मातृबधुविनाशनम् ॥५८॥ सिंहे तु मिथुने याते स्त्रिया व्याधिर्भवेद् ध्रुवम् ॥ कर्कटे तु रवौ याते बधो भवति देहिनाम् ॥ पितृबधुमृति विद्याच्चापान्मेषगते पुन ॥५९॥

गतिफल

मिथुन, कर्क, सिंह, कन्या ये माडूकी गति सज्ञक है। अतएव महाव्याधिकारक है॥५५॥ मेष, वृश्चिक धन, मीन ये सिंहावलोकन गति सज्ञक है। अत महाभय कारक है॥५६॥ सिंहावलोकन की राशि मे माडूकी गति की राशि हो तो अपमृत्यु कारक योग है। अवश्य प्रायश्चित कर्तव्य है॥५७॥ मीनराशि दशा मे वृश्चिकाधिपग्रह हो तो निश्चय ज्वर होता है। इसी प्रकार कन्या की दशा मे कर्केश हो तो माता तथा बन्धु का नाश होता है॥५८॥ सिंहराशि दशा मे मिथुनाश हो अथवा कन्या हो तो अवश्य व्याधि होती है। कर्क राशि दशा मे सूर्य हो तो बध (हत्या) होती है। मेष राशि मे धनु होने से पिता, बन्धु की मृत्यु होती है॥५९॥

## पुन. गतिफलमाह

कन्याया कर्कटे याते पूर्वभागे महत्फलम् ॥६०॥ उत्तर वेश माश्रित्य सुख यात्रा भविष्यति ॥ सिंहे तु मिथुने याते पूर्वभागो विसृज्यते ॥ वायतेपि च नैर्ऋत्या सुख यात्रा भविष्यति ॥६१॥ कर्कटे मेषसिंहे च कार्यहानिश्च योगयुक् ॥ दक्षिणा दिशमाश्रित्य प्रत्यब्द गमन भवेत् ॥६२॥ कुम्भे व्याधिर्मनोदुःख मिथुने निर्धनो भवेत् ॥ मीने तु वृश्चिके याते उदगच्छति सकटम् ॥ मकरे सकट दुःख चापात्सकटमुच्यते ॥६३॥ चापे मेषे भय यात्रा बधबधौमृतिर्भवेत् ॥ तुला सपद्विवाहश्च स्त्रीप्राप्तिर्वृश्चिके गति ॥६४॥ मेषे शुभफल विद्याद्दक्षिणे गमन सुखम् ॥ देहजीवसमायोगे मद स्थित्वाऽपमृत्युद ॥६५॥ (एव राशिफल बुद्ध्वा नक्षत्रागक्रमेण तु ॥ जीवदेहक्रमाच्चैव महादशातरदशा ॥ प्रदक्षिणेन मार्गेण वृश्चिकादि विचिंतिते ॥)

पुन गतिफल

कन्या मे कर्क राशि हो तो प्रथमार्द्ध मे अतिश्रेष्ठ॥६०॥ उत्तर दिशा की यात्रा सुखपूर्वक होती है। सिंह राशि मे मिथुन हो तो पूर्वार्द्ध नेष्ट। और उत्तरार्द्ध मे नैर्ऋत्य दिशा की यात्रा सुखकर होती है॥६१॥ कर्क राशि मे मेष और सिंह राशि होने से कार्य हानि होती है। और दक्षिण दिशा मे प्रतिवर्ष यात्रा होती है॥६२॥ कुम्भ मे व्याधि और महादुःख तथा मिथुन मे निर्धन हो। मीन राशि वृश्चिक राशि हो तो उत्तर दिशा मे सकट होता है। मकर राशि में सकट दुःख तथा धनु राशि होने से सकट होता है॥६३॥ धनु और मेष राशि मे भय और यात्रा बध और बधन तथा मृत्यु होती है। तुलाराशि दशा मे विवाह, स्त्रीप्राप्ति तथा वृश्चिक में यात्रा होती है॥६४॥ मेष राशि मे धनवृद्धि और दक्षिण दिशा मे यात्रा होती है। देह और जीवराशि के योग मे यदि शनि हो तो अपमृत्युकारक होता है॥६५॥ (इस प्रकार नक्षत्र के

अंश से राशि की दशा तथा अंतरदशा जानकर जीव और देह का योग विचार करे।। गति विचार मे सप्तम्यन्त राशि पद से मूलदशा और प्रथमान्त से अन्तर जानना चाहिए। केवल सप्तम्यन्त से अन्तर दशा जानना। दोनो का देह जीव योग देखना।)

## अथ महादशाफलमाह्

रक्तपित्ताधिकव्याधिर्नृणामर्कफलं भवेत् ॥ धनकीर्तिप्रजावृद्धिवस्त्राभरणदः शशी ॥६६॥ ज्वरमाशु दिशेत्तस्य ग्रंथिस्फोटः कुजस्य तु ॥ प्रजावृद्धिर्धने बुद्धिर्बुधे भोगफलं भवेत् ॥६७॥ धन कीर्तिं प्रजावृद्धिं नानाभोगं बृहस्पतिः ॥ विद्या विवाह सुक्षेत्र गृह धान्य भृगो फलम् ॥६८॥ तापाधिक्य महादुःख बन्धुनाश शने फलम् ॥ एवमर्कादियोगेन राशियोगेन सयुते ॥६९॥ शुभयोगे शुभं ब्रूया दशुभे त्वशुभं फलम् ॥ मिश्रे मिश्रफलं ब्रूयाद्ग्रहराशिसमुद्भवम् ॥७०॥ द्वादशाष्टमजन्मर्क्षदशायोगेन निर्णयः ॥ मृत्युकालं इति ज्ञात्वा शांति कुर्याद्विचक्षणः ॥७१॥

### कालचक्रमहादशाफल

सूर्य महादशा मे–रक्तपित्त की बीमारी विशेषरूप से होती है।
चन्द्रमहादशा मे–धन कीर्ति तथा प्रजा की वृद्धि तथा वस्त्राभरण प्राप्त होता है।।६६।।
भौमदशा मे–पित्तज्वर, ग्रन्थि का फटना आदि होता है।
बुधदशा मे–प्रजा तथा धन की वृद्धि एवं ऐश्वर्य प्राप्त होता है।।६७।।
गुरुदशा मे धन कीर्ति तथा प्रजा की वृद्धि और अनेक भोग मिलते हैं।
शुक्र दशा मे– विद्या, विवाह सुवास मकान आदि शुभ फल होता है।।६८।।
शनि दशा मे–विशेष ज्वर महादुःख तथा बन्धुनाश होता है।

इस प्रकार दशा की राशि मे सूर्यादि ग्रहो के योग से।।६९।। देखकर शुभग्रह के योग से शुभ फल और अशुभ ग्रह के योग से अशुभफल कहना चाहिए। मिश्रित योग हो तो फल भी मिश्रित होता है।।७०।। अशुभ योग के लिए १२।८ भावेशो का योग आवश्यक है। यदि मृत्यु कारक दशा हो तो शान्ति करना चाहिए।।७१।।

## अथायुर्निर्णयमाह्

मार्धिएष्यघटिका हतायुषा बाणचंद्र १५ विधिरायुष क्रमात् ॥ स्वास्ववर्षविहता स्वकीयजा कालचक्रविधिरायुषः क्रमात् ॥७२॥ भुक्तनाडिहतावर्षास्तयाबाणेंदु १५ भाजिताः ॥ वर्षमासाहघटिका स्वविकल्पविभाजिता ॥७३॥ अस्मिन्प्रवाचके षष्टे स्थिते तस्मात्प्रवाचकात् ॥ न वा नवांशराशीनामते मृत्युर्भविष्यति ॥७४॥

### अंशायु निर्णय

भुक्त तथा भोग्य अंशायु स्पष्टीकरण। नक्षत्र के जिस पाद मे जातक का जन्म है, उसकी भोग्य घटी पल को एकरस करके अपनी प्राप्त आयु के ध्रुवाक से गुणा करके १५ से भाग देने पर कालचक्र दशा की भोग्य दशा होती है॥७२॥ अथवा इसी प्रकार भुक्त घटी पलको एक रस करके अपने २ दशा वर्ष से गुणा कर १५ का भाग देने से भुक्त दशा होती है॥७३॥ यह विधि चन्द्र स्पष्ट से भी की जा सकती है। यदि इस नवांश राशि के मध्य मे मारक नही हो तो अंत की दशा मे मृत्यु होती है॥७४॥

## अथांतर्दशाफलमाह

सपर्क्षवीक्षितो यश्च येन केन समायुतः ॥ यस्य राशि. स्थितो जातस्तादृशं फलमाप्नुयात् ॥७५॥ अथाऽतो देवदेवेशि ह्यंशकांतर्दशाफलम् ॥ यथाविधि प्रवक्ष्यामि श्रूयतां कमलानने ॥७६॥ प्रथमांशे बधो भौमे ज्वरश्च व्रणसंभवः ॥ बुधशुक्रेंदुजीवेषु वस्त्राभरणमाविशेत् ॥७७॥ लभते स्वांशके देवि निश्चयं सुरवंदिते ॥ राज्ञातिकलहं सौरेः शत्रुक्षोभं महद्भयम् ॥७८॥ मेषांशस्थे तथादित्येऽनुक्रमात्फलनिश्चय. ॥ राजप्रसादमाप्नोति मेषस्वांशगते गुरौ ॥७९॥ विद्यालाभो महत्प्रीतिः शारीर सुखमेव च ॥ वृषभस्वांशके देवि गुरौ तत्र गते फलम् ॥८०॥ देशत्यागश्च मरण ज्वर शस्त्रक्षत तथा ॥ वृषभस्वांशके देवि कुजे तत्र गते फलम् ॥८१॥ वस्त्राभरणलाभ तु स्त्रियो योग महत्फलम् ॥ शुक्रेंदुगुतचन्द्राणां स्वांशके वृषभे फलम् ॥८२॥ नृपाद्भय पितृमृतिर्मृगाद्येश्च महद्भयम्॥क्षुद्ररोग च लभते वृषभस्यांशके रविः॥८३॥

### अन्तर्दशा फल

जो राशि लग्नेश दृष्ट हो अथवा शुभ या पाप जैसे ग्रह से युक्त हो, अथवा जिस ग्रह की राशि मे जन्म हो इत्यादि सब योग देखकर ही फल कहना चाहिए॥७५॥ हे पार्वति! अब दशा के अन्तरदशाओ का फल यथाविधि कहा जाता है॥७६॥ मेष राशि दशा अन्तर मे भौम हो तो ज्वर तथा व्रण का संभव है। और बुध, गुरु, शुक्र, चन्द्र हो तो (इनकी राशि का अन्तर हो तो) वस्त्र, आभरण आदि प्राप्त होते है॥७७॥ हे देवि! शनि अपने अंशदशा मे राजा से कलह करता है। शत्रु से भय करता है॥७८॥ मेष राशि नवांशदशा मे सूर्यादि ग्रहो का क्रम से फल का निश्चय करना चाहिए। गुरु अपने अंश मे राजमहल प्राप्त कराता है॥७९॥ यदि गुरु वृषराशि की दशा के अपने अन्तर मे हो तो विद्यालाभ, महान् प्रेम तथा शारीरिक सुख करता है ॥८०॥ और वृष के स्वांश मे मंगल हो तो देशत्याग, मरण, ज्वर, शस्त्राघात करता है॥८१॥ वृष के अन्तर मे शुक्र, बुध चन्द्रमा हो तो सुन्दर वस्त्र, आभूषणो का लाभ तथा स्त्री सौख्य देते है॥८२॥ वृष के अन्तर मे सूर्य राजभय, पितृमरण, पशु से भय करता है॥८३॥

मौक्तिकाभरणादीनि दारावस्त्रफलादि च ॥ लभते स्वांशके देवि मिथुनस्वांशके भृगौ ॥८४॥
पितृमातृभयं चैव ज्वरश्च व्रणसंभवः ॥ प्रयाणं कुरुते देवि मिथुनस्वांशके कुजः ॥८५॥
विद्यालाभं द्रव्यलाभं महाविभवसंभवम् ॥ समस्तप्रीतिमाप्नोति मिथुनस्वांशके गुरौ ॥८६॥
प्रयाणं च महाव्याधिर्मरणं चार्थनाशनम् ॥ बंधुनाशो भवेद्देवि मिथुनस्वांशके शनौ ॥८७॥
वस्त्रलाभं पुत्रलाभं विद्यालाभं तथैव च॥ समस्तप्रीतिमाप्नोति मिथुनस्वांशके बुधे ॥८८॥
ऐश्वर्यं धनलाभं च पुत्रपत्नीसमागमम् ॥ मनः प्रीतिमवाप्नोति कुलीरस्वांशके शशी ॥८९॥
नृपाद्भयं शत्रुभयं मृगेभ्यश्च महद्भयम् ॥ ज्वरव्याधिश्च दाहश्च कुलीरस्वांशके रवौ ॥९०॥
पुत्रलाभं बंधुलाभं रत्नविद्यार्थमेव च ॥ कुलीरस्वांशके देवि बुधशुक्रसमागमे ॥९१॥
विषशस्त्रमृतिं घोरां ज्वरदाहसमुद्भवाम् ॥ सर्वदुःखमवाप्नोति कुलीरस्वांशके कुजे ॥९२॥

(मिथुन राशि दशा का फल-शुक्र के अन्तर दशा मे मोती आदि रत्नो की प्राप्ति स्त्री, वस्त्र, भूषण प्राप्त होते है।।८४।। मिथुनान्तर मे मंगल की राशि दशा हो तो पिता माता को भय, ज्वर, घाव तथा यात्रा का योग होता है।।८५।। गुरु हो तो विद्यालाभ, धन लाभ, महान् वैभव तथा सबसे प्रेम होता है।।८६।। मिथुन के स्वीय अंश में शनि हो तो यात्रा, महाव्याधि, मृत्यु, धननाश तथा बंधुनाश होता है।।८७।। मिथुन मे स्वांश मे बुध हो तो वस्त्रलाभ, पुत्रलाभ, तथा विद्यालाभ और मित्रो मे प्रीति होती है।।८८।। यदि चन्द्रमा स्वांश मे हो तो ऐश्वर्य, धनलाभ तथा स्त्री पुत्र से मिलाप और मन की प्रसन्नता होती है।।८९।। (अब कर्क दशा फल कहते है) कर्क राशि दशा मे सूर्यांश हो तो राजभय, शत्रु तथा पशु से भय, ज्वर, व्याधि तथा दाह होता है।।९०।। तथा उसमे बुध या शुक्र के अंश की दशा हो तो पुत्र, विद्या, बन्धु, रत्न, धन का लाभ होता है।।९१।। यदि मंगल स्वांश मे हो तो विष या शस्त्र से मृत्यु तथा घोर ज्वरदाह तथा सर्वप्रकार दुःख होता है।।९२।।

विभवस्यातिलाभं च धनलाभं तथैव च ॥ नृपप्रसादमाप्नोति कुलीरस्वांशके गुरौ ॥९३॥
वातव्याधिश्च निर्घातमसुराविषदशकम् ॥ सर्वक्लेशमवाप्नोति कुलीरस्वांशके शनौ ॥९४॥
ज्वरपित्तविनष्टुं च शस्त्रक्षतविपूचिकाः ॥ मुखरोगमवाप्नोति मृगेंद्रस्वांशके कुजे ॥९५॥
वस्त्राभरणविद्याश्च सुतस्त्रीलाभमेव च ॥ मृगेंद्रस्वांशके देवि भार्गवे च बुधागमे ॥९६॥
आरूढपतनं चैव देशत्यागं महद्भयम् ॥ महाधनविघातं च सिंहस्वांशगतः शशी ॥९७॥
महाशत्रुभयं चैव ज्वरश्च व्याधिरेव च ॥ अज्ञानं मरणं राज्ञो मृगेंद्रस्वांशगे च वै ॥९८॥
धनधान्यमहालाभं प्रसादं द्विजदेवयोः ॥ विद्यालाभमवाप्नोति मृगेन्द्रस्वांशगे गुरौ ॥९९॥
प्रयाणं च ज्वरं चैव सुदुःखं वैकल्यं तथा ॥ व्याधिदुःखमवाप्नोति कन्यास्वांशगते शनौ॥१००॥
नृपप्रसादनं लाभमैश्वर्यं बंधुसंभवम् ॥ विद्यालाभमवाप्नोति कन्या स्वांशगते गुरौ ॥१०१॥ प्रयाणं
च ज्वरं चैव मसूरोपहिना भयम् ॥ शस्त्रक्षतं च मरणं कन्यास्वांशगते कुजे ॥२॥

कर्क के अपने अश मे गुरु हो तो अति विभव लाभ धनलाभ तथा राजमैत्री प्राप्त होती है।।९३।। इसी प्रकार शनि हो तो वातव्याधि, तथा घात एव मसूर (जगली पशु) का विषयुक्त दशन तथा अन्य अनेक क्लेश प्राप्त होते हैं।।९४।। (अब सिंह राशि के अन्तर कहते हैं) सिहदशा मे कुजान्तर मे ज्वर, पित्त, रोग, शस्त्राघात, हैजा तथा मुख के रोग होते है।।९५।। शुक्र तथा बुध मे सुन्दर वस्त्र, भूषण, विद्या, पुत्र, स्त्री का लाभ होता है।।९६।। सिह की दशा मे चन्द्र हो तो उन्नत अवस्था से पतन, देशत्याग, महाभय, विशेष धनहानि होती है।।९७।। महाशत्रु का भय ज्वर तथा व्याधि, अज्ञान और मृत्यु होती है।।९८।। (सूर्य से उपर्युक्त फल जानना) सिह राशि की अन्तर दशा मे गुरु अपने अश मे हो तो धन सम्पत्ति का लाभ द्विज, देवता की कृपा तथा विद्या लाभ होता है।।९९।। (कन्या राशि दशा मे अन्तरदशा फल) शनि स्वाश मे हो तो यात्रा, ज्वर, भूख प्यास से कष्ट तथा रोग दुःख प्राप्त होता है।।१००।। स्वाश मे गुरु हो तो राजकृपा, लाभ, ऐश्वर्य, बन्धु प्राप्ति तथा विद्या का लाभ होता है।।१०१।। मगल स्वाश मे हो तो व्यर्थ की यात्रा, ज्वर, मसूरी रोग, अग्नि भय, शस्त्र से घाव तथा मृत्यु होती है।।१०२।।

**भृत्यपुत्रार्थलाभं च वस्त्राभरणमेव च ॥ शुक्रेन्दुसुतचंद्राणां कन्यास्वांशगते फलम् ॥३॥ प्रयाणं च ज्वरश्चैव पुत्रहानिस्तथैव च ॥ शस्त्रघातेन मरणं कन्या स्वांशगते रवौ ॥४॥ स्त्रीलाभं धनलाभं च पुत्रलाभं तथैव च ॥ वस्त्राभरणलाभं च तुलास्वांशगते भृगौ ॥५॥ पिता सुहृद्धनं चैव शिरोरोगं ज्वरं तथा ॥ शस्त्राग्निक्षतघातं च तुलास्वांशगते कुजे ॥६॥ धनं रत्नं महालाभं धर्मं चेष्टा नृपावहम् ॥ सर्वसंपत्समृद्धिश्च तुलास्वांशगते गुरौ ॥७॥ प्रयाणं च महाव्याधि मेवं क्षेत्रभयं तथा ॥ शत्रुबाधा महादुःखं तुलास्वांशगते शनौ ॥८॥ पुत्रलाभं धनं स्त्रीणां लाभं चैव मनः प्रियम् ॥ सौभाग्यं बंधुलाभं च तुलास्वांशगते बुधे ॥९॥ व्याधिनाशं महत्सौख्यं नानासर्वार्थसिद्धिदम् ॥ भृगुसौम्यशशांकानां वृश्चिकस्वांशगे फलम् ॥११०॥**

शुक्र, बुध तथा चन्द्रमा स्वाश मे हो, तो स्त्रीपुत्र, नौकर आदि की प्राप्ति तथा वस्त्रभूषण का लाभ होता है।।१०३।। सूर्य में यात्रा, ज्वर, पुत्रहानि, शस्त्राघात होता है।।१०४।। (तुला राशि दशा के अन्तर) स्वाश मे शुक्र हो तो स्त्री, पुत्र, धन, वस्त्र, सम्पत्ति का लाभ होता है।।१०५।। मगल हो तो पिता, मित्र, धन की हानि, सिर दर्द, बुखार, शस्त्र से आघात तथा अग्नि का भय होता है।।१०६।। गुरु स्वाश मे हो तो धन, रत्न, धर्म, सर्व सम्पत्ति तथा राजकृपा का लाभ होता है।।१०७।। शनि स्वाश मे हो तो यात्रा, महाव्याधि, शत्रुबाधा तथा हानि होती है।।१०८।। बुध स्वाश मे हो तो स्त्रीपुत्र, धनलाभ, इच्छित वस्तु की प्राप्ति, सौभाग्य और बन्धु लाभ होता है।।१०९।। बुध, शुक्र, चन्द्रमा स्वाश मे हो तो व्याधि का नाश, महान् सुख, सम्पूर्ण अर्थ की सिद्धि होती है।।११०।।

**शत्रुक्षोभं भयं व्याधिमर्थनाशं पितुर्भयम् ॥ मृगाद्भयमवाप्नोति वृश्चिकस्वांशगे रवौ ॥११॥ वातपित्तभयं चैव मसूरीव्याधिमेव च ॥ अग्निशस्त्रादिभीतिं च वृश्चिकस्वांशगे कुजे ॥१२॥ धनं रत्नं च धान्यं च देवब्राह्मणपूजनम् ॥ राजप्रसादमाप्नोति वृश्चिकस्वांशगे गुरौ ॥१३॥**

धनबंधुविनाशश्च मनोवधस्तथाकुलम् ॥ शत्रुबाधा महाव्याधिर्वृश्चिकस्वांशगे शनौ ॥१४॥
अतिदाहं ज्वरं छर्दिर्मुखरोगं च कष्टताम् ॥ शरीरक्लेशमाप्नोति चापस्वांशगते कुजे ॥१५॥
श्रीविद्यानां च सौभाग्यं शत्रुनाशं नृपाद्भयम् ॥ भार्गवेंदुजचंद्राणां चापस्वांशगते फलम् ॥१६॥
स्त्रीनाशं वित्तनाशं च कलहं च नृपाद्भयम् ॥ प्रयाणं समवाप्नोति चापस्वांशगते रवौ ॥१७॥
दानधर्मतपोलाभं राजपूजनमेव च ॥ स्त्रीलाभं धनलाभं च चापस्वांशगते गुरौ ॥१८॥
द्विजदेवनृपात्कोपं बंधुभिश्च विनाशनम्॥देशत्यागमवाप्नोति मृगस्वांशगते शनौ॥१९॥

(वृश्चिक राशि दशा के अन्तर फल)-सूर्य मे शत्रु से क्षोभ, भय, व्याधि, धननाश, पिता से भय होता है। एव पशु से क्षति होती है॥१११॥ मगल के अश मे वातपित्त की बीमारी, शीतला की बीमारी, अग्नि तथा शस्त्र से भय होता है॥११२॥ गुरु के अश मे धनसम्पत्ति रत्न की प्राप्ति, देव ब्राह्मण पूजा तथा राजकृपा प्राप्त होती है॥११३॥ शनि के अश मे धन, बन्धु का नाश, चिन्ता व्याकुलता, शत्रुबाधा, महाव्याधि होती है॥११४॥ मगल के अश मे दाह, ज्वर, वमन, मुख रोग, दर्द और क्लेश होता है॥११५॥ बुध, शुक्र तथा चन्द्रमा के अश मे धन, विद्या, सम्पत्ति प्राप्त होती है। शत्रु नाश तथा राजभय होता है॥११६॥ (धन राशि दशा के अन्तर फल) सूर्य के अश मे स्त्रीनाश, धन हानि, कलह, राजभय तथा यात्रा होती है॥११७॥ गुरु के अश मे दान, धर्म, तप, स्त्रीधन का लाभ तथा राज सम्मान होता है॥११८॥ (मकर राशि दशा के अन्तर फल) शनि के अश मे देव, ब्राह्मण, राजा का कोप, बन्धुवो से नाश तथा देशत्याग होता है॥११९॥

देवार्चनं तपो ध्यानं द्विजपूजादिसंभवम् ॥ भार्गवेन्दुजीवानां मृगस्वांशगते फलम् ॥१२०॥
शिरोरोगं ज्वरं चैव करपादगतक्षतम् ॥ रक्तपित्तातिसाराश्च मृगस्वांशगते कुजे ॥२१॥
बंधुपुत्रपितुर्नाशं ज्वररोगसमाश्रयम् ॥ नृपशत्रुभयं चैव मृगस्वांशगते शनौ ॥२२॥
नानाविद्यार्थलाभं च पुत्रस्त्रीमित्रसंभवम् ॥ ऐश्वर्यं धनलाभं च घटस्वांशगते भृगौ ॥२३॥
ज्वराग्निचोरघातं च शत्रूणां च महद्भयम् ॥ मनोदुःखमवाप्नोति घटस्वांशगते कुजे ॥२४॥
दुःखव्याधिहरं चैव देवब्राह्मणपूजनम् ॥ मनःप्रीतिमवाप्नोति घटस्वांशगते गुरौ ॥२५॥
त्रिदोषकुपितं चैव कलहं देशविभ्रमम् ॥ क्षयव्याधिमवाप्नोति घटस्वांशगते शनौ ॥२६॥
पुत्रमित्रधनस्त्रीणां लाभं चैव मनःप्रियम्॥ सौभाग्यं वस्त्रलाभं च घटस्वांशगते बुधे॥२७॥

शुक्र, बुध, चन्द्र, बृहस्पति के अशो मे देवार्चन, तप ध्यान, द्विजपूजा आदि होता है॥१२०॥ मगल के अश मे सिरदर्द ज्वर हाथ पैर मे घाव, रक्त पित्त, अतिसार की बीमारी होती है॥१२१॥ शनि के अश मे बन्धु, पुत्र, पिता की हानि, ज्वर, राजा तथा शत्रु से भय होता है॥१२२॥ (कुम्भ राशि दशा के अन्तर फल) शुक्र के अश मे अनेक विद्या तथा धन लाभ, स्त्रीपुत्र, मित्र का सुख तथा ऐश्वर्य होता है॥१२३॥ मगल के अश मे ज्वर अग्नि, चोर से हानि, शत्रु से भय, मन मे दुःख होता है॥१२४॥ गुरु के अश मे दुःख, व्याधि का नाश, देव ब्राह्मण की पूजा, मन मे सन्तोष होता है॥१२५॥ शनि के अश मे सन्निपात, कलह, देशयात्रा,

क्षय रोग होता है॥१२६॥ बुध के अंश में पुत्र, मित्र, धन, स्त्री का लाभ, वस्त्र प्राप्ति, मन में सन्तोष और सौभाग्य होता है॥१२७॥

स्त्रीविद्यालाभमाप्नोति ह्याश्रितव्याधिनाशनम् ॥ महापीडामवाप्नोति मीनस्वांशगतः शशी ॥२८॥ कलहं चौरभीतिं च बंधुभिः क्षयकारणम् ॥ स्थानभ्रंशमवाप्नोति मीनस्वांशगते रवौ ॥२९॥ शत्रुनाशं च विजयं नृपगोभूसुतागमम् ॥ रत्नलाभं च मीने च स्वांशगे बुधशुक्रयोः ॥१३०॥ विवाद पित्तरोग च जंतोर्जारणमारणम् ॥ शत्रुक्षयमवाप्नोति मीनस्वांशगते कुजे ॥३१॥ धनधान्यकलत्राणि लभते राजपूजनम् ॥ वस्त्राभरणलाभं च मीनस्वांशगते गुरौ ॥३२॥ ऐश्वर्यस्य प्रणाशश्च वेश्यादीनामुपद्रवैः ॥ देशत्यागो दरिद्रं च मीने स्वांशगते शनौ ॥३३॥ एवं यथाक्रमेणैव विज्ञेयं स्वांशगते फलम् ॥ वामसव्येष्वेवमेव च फल तत्रैव योजयेत् ॥३४॥ दशाफलमहं वक्ष्ये धर्मकर्मकृतं पुरा ॥ सत्सर्वं प्राणिभिर्नित्यं प्राप्यते नात्र संशयः ॥३५॥ सुहृदन्तर्दशा भव्या विरुद्धा शत्रुसंभवा ॥ मध्यमा मध्यखेटस्य दशादीनामिदं विदुः ॥१३६॥

चन्द्रमा के अंश में स्त्री, विद्या लाभ, आश्रित मनुष्य की व्याधि का नाश तथा पीडा होती है॥१२८॥ (मीन राशि दशा के अन्तरफल) सूर्य के अंश में कलह, चोर भय, बन्धुओं से हानि, स्थान नाश होता है॥१२९॥ बुध, शुक्र के अंश में शत्रु नाश, विजय, राजा, गौ, ब्राह्मण की कृपा तथा मिलाप एवं रत्न लाभ होता है॥१३०॥ मगल के अंश में विवाद, पित्तरोग, सीसाधातु का भस्म करना, शत्रु क्षय आदि होते हैं॥१३१॥ गुरु के अंश में धन सम्पत्ति, स्त्री का लाभ, राजपूजा, वस्त्राभरण का लाभ होता है॥१३२॥ शनि के अंश में वेश्या सग से समस्त ऐश्वर्य का नाश, देशत्याग, दरिद्र होता है॥१३३॥ इस प्रकार क्रम से ग्रहों का फल सव्य मार्ग का कहा गया है। इन्ही फलो को अप-सव्य मार्ग मे भी समझना चाहिए॥१३४॥ मनुष्यों के पूर्व जन्मकृत धर्म, कर्म के फल से इस जन्म मे जो सुख दु ख प्राप्त होते हैं, वे सब इस दशा के रूप मे प्राप्त होते हैं यह नि सन्देह है॥१३५॥ मित्रग्रह की अन्तरदशा शुभ, शत्रुग्रह की अशुभ, समग्रह की मध्यम समझना चाहिए॥१३६॥

## अथ नवांशफलमाह

मेषे तु रक्तपीडा च वृषभे धान्यवर्द्धनम् ॥ मिथुने ज्ञानसम्पत्त्यै धनपतिर्भवेत् ॥१३७॥ सूर्यर्क्षे शत्रुबाधा च कन्यास्त्रीणां च नाशनम् ॥ तौलिके राजमन्त्रित्वं वृश्चिके मरणं भवेत् ॥३८॥ अर्थलाभो भवेच्चापे मेषस्य नवभागके ॥ मकरे पापकर्माणि कुंभे वाणिज्यमेव च ॥३९॥ मीने सर्वार्थसिद्धिश्च वृश्चिकेऽप्यग्नितो भयम् ॥ तौलिके राजपूज्यश्च कन्यायां शत्रुवर्धनम् ॥१४०॥ शशिभे दारसबाधा सिंहे च स्वशिरोगकृत् ॥ मिथुने बंधबाधा स्याद्वृषभे च नवांशके ॥४१॥ वृषभे अर्थलाभ च मेषे तु ज्वररोगकृत् ॥ मिथुने मातुलप्रीतिः कुंभे शत्रुप्रवर्द्धनम् ॥४२॥ मृगे चौरस्य संबाधा धनुषि शास्त्रवर्धनम् ॥ मेषे तु शस्त्रसंबंधो वृषभे कलहप्रियः ॥४३॥ मिथुने सुखमाप्नोति मिथुनस्य नवांशके ॥ कर्कटे सर्वप्राप्तिः सिंहे राजप्रकोपकृत् ॥४४॥

**नवांश फल**

(इन पूर्वोक्त राशि दशाओ मे प्रत्येक अन्तर मे जो राशि होगी, केवल उस राशि के

अनुसार फल कहा जाता है।) मेष अश मे रत्नपीडा। वृष मे धान्य वृद्धि। मिथुन मे ज्ञान। कर्क मे धनपति होता है॥३७॥ सिंह मे शत्रु बाधा। कन्या मे स्त्रीनाश। तुला मे राजमंत्री। वृश्चिक मे मृत्यु हो॥३८॥ धनु के अंश मे धनलाभ। ये मेष के नौ अश की राशियो के फल हैं॥३९॥ (वृषराशि के अतर) मकर मे पापकर्म। कुभ मे व्यापार॥३९॥ मीन मे सर्वसिद्धि। वृश्चिक मे अग्नि भय। तुला मे राजपूज्यता। कन्या मे शत्रुभय॥४०॥ कर्क मे स्त्री से कलह। सिंह मे नेत्ररोग। मिथुन मे वृक्ष से हानि। ये वृषराशि के ९ नवाश राशि का फल है॥४१॥ (मिथुनान्तर फल) वृष मे अर्थलाभ। मेष मे ज्वर। मिथुन मे मामा का प्रेम। कुम्भ मे शत्रुभय॥४२॥ मकर मे चोर भय। धन मे शस्त्रवृद्धि। मेष मे शस्त्र योग। वृष मे कलह॥४३॥ मिथुन मे सुख होता है॥ ये मिथुनाश दशा के ९ नवाशराशि का फल है। कर्क मे सकट। सिंह मे राजकोप॥४४॥

**कन्याया भ्रातृपूजा च तौलिके प्रियकृत्तरः ॥ वृश्चिके पितृबाधा स्यात्कर्कटस्य नवांशके ॥४५॥ वृश्चिके कलहः पीडा तौलिके ह्यधिकं फलम् ॥ कन्यायामतिलाभश्च शशाके मृगबाधिका ॥४६॥ सिंहे च पुत्रलाभश्च मिथुने शत्रुवर्द्धनम् ॥ मीने तु दीर्घयात्रा स्यात्सिंहस्य नवभागके ॥४७॥ कुंभे तु धनलाभश्च मकरे द्रव्यलाभकृत् ॥ धनुषि भ्रातृसंसर्गो मेषे मातृविवर्द्धनम् ॥४८॥ वृषभे पुत्रवृद्धिः स्यान्मिथुने शत्रुवर्द्धनम् ॥ शशिभे तु स्त्रिया प्रीतिः सिंहे व्याधिविवर्द्धनम् ॥४९॥ कन्यायां पुत्रवृद्धिः स्यात्कन्यायाः नवमांशके ॥ तुलायामर्थलाभश्च वृश्चिके भ्रातृवर्द्धनम् ॥१५०॥ चापे च तातसौख्यं च मृगे मातृविरोधिता ॥ अलौ जायाविरोधः च तुले च जलबाधनम् ॥५१॥ कन्यावृद्धिकरं विद्यात्तुलायाः नवभागके ॥ कर्कटे ह्यर्थनाशश्च सिंहे राजविरोधिता ॥५२॥**

कन्या मे भ्रातृपूजा। तुला मे सुख। वृश्चिक मे पितृबाधा होती है॥४५॥ वृश्चिक मे कलह पीडा। तुला मे अधिक फल। कन्या मे अतिलाभ। कर्क मे पशु से हानि॥४६॥ सिंह मे पुत्रलाभ। मिथुन मे शत्रुवृद्धि। मीन मे दीर्घ यात्रा। सिंह राशि के नवाश का फल है॥४७॥ कुभ मे धनलाभ। मकर मे द्रव्य लाभ। धनु मे भ्रातृ सयोग। मेष मे मातृकुल मे वृद्धि॥४८॥ वृष मे पुत्रवृद्धि। मिथुन मे शत्रुवृद्धि। कर्क मे स्त्री से प्रेम। सिंह मे व्याधिवृद्धि॥४९॥ कन्या मे पुत्रवृद्धि। ये कन्या नवाश दशा के अतर के फल है। तुला मे धनलाभ। वृश्चिक मे भ्राता वृद्धि॥१५०॥ चाप (धनुराशि) मे पितृ सुख। मकर मे माता से विरोध। तुला मे जलबाधा। कन्या मे वृद्धि। ये तुला के नवाश का फल हुआ। कर्क मे धननाश सिंह मे राजविरोध॥५२॥

**मिथुने भूमिलाभश्च वृषभे चार्थलाभकृत् ॥ चापे तु धनलाभः स्याद्वृश्चिकस्य नवांशके ॥५३॥ मेषे तु धनलाभः स्याद्वृषे भूमिविवर्द्धनम् ॥ मिथुने सर्वसिद्धिः स्यात्कर्कटे सर्वसिद्धिकृत् ॥५४॥ सिंहे तु पूर्ववृद्धिः स्यात्कन्यायां कलहो भवेत् ॥ तौलिके चार्थलाभः स्याद्वृश्चिके रोगमाप्नुयात् ॥५५॥ चापे तु सुतवृद्धिः स्याच्चापस्य नवमांशके ॥ मकरे पुत्रलाभः स्यात्कुंभे धान्यविवर्द्धनम् ॥५६॥ मीने कल्याणमाप्नोति वृश्चिके नृपबाधिता ॥ तौलिके त्वर्थलाभश्च कन्यायां शत्रुवर्द्धनम् ॥५७॥ शशिभे प्रियमाप्नोति सिंहे तु नृपबाधिता ॥ मिथुने वृक्षबाधा च मृगस्य नवभागके ॥५८॥ वृषभे त्वर्थलाभं च मेषस्य त्वग्निरोगकृत् ॥ मिथुने ...**

**स्यात्कुंभे स्वस्य विवर्द्धनम् ॥५९॥ मकरे सर्वसिद्धिः स्याच्चापे शत्रुविवर्द्धनम् ॥ मेषे सौख्यविनाशश्च वृषभे मरणं भवेत् ॥१६०॥**

मिथुन में भूमिलाभ। वृष में धनलाभ। धन में अर्थलाभ। ये वृश्चिक के नवांश के फल है॥५३॥ मेष में धनलाभ। वृष में भूमिवृद्धि। मिथुन में सर्वसिद्धि। कर्क में भी सर्व सिद्धि॥५४॥ सिंह में वृद्धि। कन्या में कलह। तुला में धनलाभ। वृश्चिक में रोग॥५५॥ धन में सुतवृद्धि। ये धनराशि के नवांश के फल है। मकर में पुत्र वृद्धि। कुंभ में धान्यवृद्धि॥५६॥ मीन में कल्याण। वृश्चिक में पशु से हानि होती है। तुला में धनलाभ। कन्या में शत्रुवृद्धि॥५७॥ कर्क में धनाप्ति। सिंह में पशु से भय। मिथुन में वृक्ष से हानि। ये मकर नवांश का फल है॥५८॥ वृष में धन लाभ। मेष में आंख की बीमारी। मिथुन में लंबी यात्रा। कुंभ में वृद्धि॥५९॥ मकर में सर्व सिद्धि। धन में शत्रु वृद्धि। मेष में सुखनाश। वृष में मृत्यु॥१६०॥

**युग्मे कल्याणमाप्नोति कुंभस्य नवमांशके ॥ कर्कटे धनवृद्धिःस्यात्सिंहे तु राजपूजनम् ॥६१॥ कन्यायामर्थलाभस्तु तुलायां लाभमाप्नुयात् ॥ वृश्चिके ज्वरमाप्नोति चापे शत्रुविवर्द्धनम् ॥६२॥ मृगे जायाविरोधं च कुंभे जलविरोधता ॥ मीने तु सर्वसौभाग्यं मीनस्य नवभागके ॥६३॥ दशादिक्रमेणैव ज्ञात्वा सर्वफलं वदेत् ॥ क्रूरग्रहदशाकाले शांतिं कुर्याद्विचक्षणः ॥६४॥**

**इति श्रीबृहत्पाराशरहोराशास्त्रे पूर्वखण्डे कालचक्रदशाफलकथनं नाम पञ्चचत्वारिंशोऽध्यायः ॥४५॥**

मिथुन में कल्याण। ये कुंभराशि के नवांश का फल है। कर्क में धनवृद्धि। सिंह में राजा का आदर॥६१॥ कन्या में धनलाभ। तुला में लाभ। वृश्चिक में ज्वर। धन में शत्रुवृद्धि होती है॥१६२॥ मकर में भार्या से विरोध। कुंभ में जल से हानि। मीन में सर्व सौभाग्य। ये मीन राशि दशा के नवांश राशियों के फल है॥६३॥ दशा के आदि के अंश के क्रम से फल कहना चाहिए। क्रूरग्रह की दशा के समय शान्ति करनी चाहिए॥६४॥

इति श्रीबृ० पा० हो० शा० पू० भावप्रका० कालचक्रदशाफलकथन नाम पञ्चचत्वारिंशोऽध्याय ॥४५॥

## अथ चरदशाफलमाह

**अधुना संप्रवक्ष्यामि चरपर्यादशाफलम् ॥ यस्य विज्ञानमात्रेण दैवज्ञो जायते द्विज ॥१॥ नराणां सर्वमायुश्च सुखदुःखशुभाशुभम् ॥ सर्ववेत्ता निर्विशंक भवतीह न संशयः ॥२॥ जन्मलग्नात्समारभ्य भानुभावे द्विजोत्तम ॥ आयुर्वर्षप्रदा ज्ञेया फलं तस्या वदाम्यहम् ॥३॥ यदा दशाप्रदो राशिस्तस्य रंध्रत्रिकोणयोः पापखेटयुते विप्र सा दशा दुःखदायिका ॥४॥ तृतीयषष्ठगे पापे जयादिः परिकीर्तिता ॥ शुभ खेटयुते तत्र जायतेऽपि पराजयः ॥५॥ साम्ये शुभपापश्च लाभो भवति निश्चितम् ॥ यदा दशाप्रदो राशि- शुभखेटयुतो द्विज ॥६॥ शुभक्षेत्रे**

हि तद्राशिः शुभकर्ता दशाफलम् ॥ पापयुक्ते शुभक्षेत्रेऽपूर्वयुक्तं सुखोत्तमे ॥७॥ पापर्क्षे शुभसंयुक्ते पूर्वसौख्यं ततो न्यसेत् ॥ पापक्षेत्रे पापयुक्ते सा दशा सर्वदुःखदा ॥८॥ शुभक्षेत्रदशा राशौ युक्ते पापशुभौ द्विज ॥९॥ पूर्वं कष्टं सुखं पश्चान्निर्विशंकं प्रजायते ॥ पापर्क्षे पापशुभगौ पूर्वसौख्यं समेन तत् ॥ शुभक्षेत्रे शुभं वाच्यं पापर्क्षे त्वशुभं फलम् ॥१०॥

## चरपर्यादशाफल

अब चरपर्यादशा का फल कहते है। जिसके जानने से मनुष्य दैवज्ञ होता है॥१॥ मनुष्यो की सम्पूर्ण आयु के शुभाशुभ सुख दुःख आदि का निश्चय रूप से ज्ञाता होता है॥२॥ जन्म समय के लग्न से आरभ करके १२ भावो मे पूर्वोक्तानुसार आयु के वर्ष होते हैं, उनका फल कहते हैं॥३॥ जब जिस भाव का विचार करना है तब देखना चाहिए कि उस राशि से ५।८।९ स्थान मे पापग्रह हो तो उस राशि की दशा दुःखदायक होती है॥४॥ विचार्य राशि से ३।६ स्थान मे पापग्रह हो तो जय आदि शुभ फल और शुभग्रह युक्त हो तो पराजय होती है॥५॥ लाभ स्थान मे शुभ और पाप दोनो प्रकार के ग्रह हो तो निश्चय लाभ होता है। हे द्विज! जब दशास्वामिनी राशि शुभ ग्रह युक्त हो॥६॥ तथा राशि भी शुभस्थान मे हो तो दशा का फल शुभ होता है। राशि यदि पापग्रह युक्त शुभस्थान में हो तो कल्याणकारी है॥७॥ राशि पाप हो और उसमे शुभग्रह हो तो पहिले सुख होता है। पापराशि मे पापग्रह हो तो वह दशा सर्वदुःख दाता है॥८॥ शुभक्षेत्र की दशा राशि की हो उसमें शुभपाप दोनो प्रकार के ग्रह हो तो॥९॥ पहिले कष्ट और पश्चात् सुख होता है। पापराशि मे शुभ और पापग्रह हो तो प्रथम सौख्य होता है। राशि यदि शुभ हो तो शुभ और पाप हो तो अशुभ फल होता है॥१०॥

द्वितीये पंचमे सौम्ये राजप्रीतिर्जयो ध्रुवम् ॥ पापे तृतीयगे खेटे शत्रोर्निग्रहणं जयः ॥११॥
चतुर्थे तु शुभे सौख्यमारोग्यं त्वष्टमे शुभे ॥ धर्मवृद्धिर्गुरुजनात्सौख्यं च नवमे शुभे ॥१२॥
विपरीते विपर्यासो मिश्रेमिश्रं प्रकीर्तितम् ॥ पापे योगे च पापदेर्देहपीडा मनोव्यथा ॥१३॥
सप्तमे पापयोगाभ्यां पापे दारार्तिरीरिता ॥ चतुर्थे स्थानहानिः स्यात्पंचमे पुत्रपीडनम् ॥१४॥
दशमे कीर्तिहानिः स्यान्नवमे पितृपीडनम् ॥ पापाद्व्ययगते पापे पीडा सर्वाप्यबाधिका ॥१५॥
उक्तस्थानगते सौम्ये तत्र सौख्यं विनिर्दिशेत् ॥ केन्द्रस्थानगते सौम्ये लाभशत्रुजयप्रदः ॥१६॥
जन्मकालग्रहैः स्थित्वा अथोचरग्रहैरपि ॥ विचारितैः प्रवक्तव्यं तत्तद्राशिदशाफलम् ॥१७॥
यस्य राशिः शुभाक्रांतो यस्य पश्चाच्छुभग्रहाः ॥ तद्दशा शुभदा प्रोक्ता विपरीते विपर्ययः ॥१८॥

द्वितीय, पंचम में सौम्यग्रह हो तो राजप्रीति और जय होती है। तृतीयभाव मे पापग्रह हो तो शत्रु की पराजय तथा बन्धन और अपनी जय होती है॥११॥ चतुर्थ भाव मे शुभग्रह हो तो सुख और अष्टभाव मे शुभग्रह हो तो आरोग्यता होती है। और नवमभाव मे शुभग्रह हो तो गुरु जनो मे धर्मवृद्धि और सौख्य होता है॥१२॥ विपरीत परिस्थिति हो तो विपरीत कहना। पापराशि मे पापग्रह हो तो देहपीडा और मनोव्यथा होती है॥१३॥ सप्तमभाव मे पापग्रह के योग से या स्थिति से भार्या को कष्ट होता है। चतुर्थभाव मे पापयोग हो तो स्थान हानि तथा पंचमभाव मे पापयोग से पुत्र को पीडा होती है॥१४॥ दशमभाव मे पापयोग से कीर्तिहानि

तथा नवम मे पापयोग से पितृपीडा होती है। और यदि पापग्रह से ११वे भाव मे भी पापग्रह हो तो अबाध पीडा होती है॥१५॥ तथा ११ मे सौम्य ग्रह हो तो सौख्य होता है। यदि केन्द्र स्थान मे सौम्य ग्रह हो तो लाभ और शत्रु पर जय होती है॥१६॥ इस प्रकार जन्मकाल की ग्रह स्थिति तथा वर्तमान ग्रहस्थिति का विचार करके ही तत् २ राशि दशा का फल कहना चाहिए॥१७॥ जिस जातक की राशि ग्रह युक्त हो और राशि के पृष्ठभाग मे भी शुभग्रह हो वह दशा शुभ फलदायिनी होती है और विपरीत होने से विपरीत फल होता है॥१८॥

**त्रिकोणरंध्ररिष्फस्थैः शुभपापैः शुभाशुभम् ॥ तद्दशा प्रदराशौषु वक्तव्यं फलमन्यथा ॥१९॥ मेषकर्कतुलानक्रराशीनां च यथाक्रमम् ॥ बाधास्थानादिसप्रोक्ता कुंभगोसिंहवृश्चिकाः ॥२०॥ पाकश्चरांतराशौ वा बाधास्थाने शुभेतरे ॥ स्थिते सति महाशोको बंधनं व्ययनाशनम् ॥२१॥ उच्चस्वर्क्षग्रहे तस्मिञ्छुभं सौख्य धनागमः ॥ तच्छून्यं चेदसौख्य स्यात्तद्दशा न फलप्रदाः ॥२२॥ बाधकव्ययषड्रन्ध्रे राहुयुक्ते महद्भयम् ॥ प्रस्थानं बंधन-प्राप्ती राजपीडा रिपोर्भयम् ॥२३॥ रव्यारराहुशनयो भुक्तिराशौ स्थिता यदि ॥ तद्राशियुक्ताः पतनं राजकोपान्महद्भयम् ॥२४॥ भुक्तिराशित्रिकोणे तु नीचखेटः स्थितो यदि ॥ तद्राशौ वा युते नीचे पापे मृत्युभयं भवेत् ॥२५॥ भुक्तिराशौ स्वतुगस्थे त्रिकोणे वापि तुंगमे ॥ यदा भुक्तिदशा प्राप्ता तदा सौख्यं लभेन्नरः॥२६॥नगरग्रामनाथत्व पुत्रलाभ धनागमम् ॥ कल्याणंभौमभाग्यं च सेनापत्य महोन्नतम् ॥२७॥**

'५।८।९।१२' भावो मे शुभ तथा पाप दोनो प्रकार के ग्रह हो तो मिश्रित फल होता है उस राशि दशा मे मिश्रित फल कहना चाहिए॥१९॥ मेष, कर्क, तुला, मकर राशियो के फल के प्रतिबधक स्थान क्रम से कुभ, वृष, सिह, वृश्चिक है॥२०॥ दशाप्रद राशि स्थिर द्विस्वभाव हो और उसके बाधा स्थान मे पापग्रह हो तो महाक्लेश, बधन, व्यय और नाश होता है॥२१॥ तथा उस दशाराशि मे उच्च का या स्वगृही ग्रह हो तो शुभ, सौख्य और धनलाभ होता है। यदि वह राशि ग्रह शून्य हो तो अशुभ या फलहीन होती है॥२२॥ बाधक स्थान से ६।८।१२ राहुयुक्त हो तो महान् भय होता है। यात्रा बधनप्राप्ति, राजा तथा शत्रु से पीडा और भय होता है॥२३॥ सूर्य, मगल, शनि, राहु ये ग्रह यदि दशा राशि मे या अन्तरदशा राशि मे हो तो पतन और राजकोप से भय होता है॥२४॥ दशाराशि से त्रिकोण मे यदि नीच राशिगत ग्रह हो अथवा उस राशि मे ही नीचस्थ या पापग्रह हो तो उसके भोगकाल मे मृत्यु का भय होता है॥२५॥ भुक्तिराशि मे उच्चस्थ ग्रह हो अथवा उससे त्रिकोणभाव मे उच्चस्थ ग्रह हो तो उस दशा के भोगकाल मे मनुष्य को बहुत सुख होता है॥२६॥ वह मनुष्य नगर तथा ग्राम का स्वामी, धन, पुत्र प्राप्ति, सेनापति का बडा ऊँचा पद प्राप्त करता है॥२७॥

**पाकेश्वरो जीवदृष्टः शुभराशिस्थितो यदि ॥ तद्दशायधनप्राप्तिर्मंगल पुत्रसमतम् ॥२८॥ सितासितागुराश्च सूर्यस्य रिपुराशयः ॥ कौर्पितौलिघटश्चैदोर्मोमस्य रिपुराशयः ॥२९॥ घटमीननृयुक्तौलिकन्या ज्ञस्य ततः परम् ॥ कर्कमीनालिकुंभाश्च राशयो रिपुवत्स्मृताः ॥३०॥ मेषसिंहधनुः कौर्पिकर्कटाः शनिशत्रवः ॥ वृषतौलिनृयुक्कन्याराशयो रिपवोगुरोः ॥३१॥ सिंहालिकर्कचापाश्च शुक्रस्य रिपुराशयः ॥ एवं ग्रहांतरदशां चिंतयेत्कोविदो द्विज**

॥३२॥ ये राजयोगदा ये च शुभमध्यगता ग्रहाः ॥ यस्माद्वाऽपित्रिकोणाः स्युः शुभाशुभफल ग्रहाः ॥३३॥ तद्दशायां शुभं ब्रूयाद्राजयोगादिसंभवम् ॥ शुभद्वयांतरगतः पापोपि शुभदः फलम् ॥३४॥ गताशुभदशामध्ये दशासौम्यस्य शोभना ॥ शुभं यस्य त्रिकोणस्य तद्दशापि शुभप्रदा ॥३५॥ आरंभांतौ मित्रशुभराश्योर्यदि फलं शुभम् ॥ प्रतिराश्येककोब्द स्याच्चालनीयं शुभ द्विज ॥३६॥

दशा स्वामी गुरुदृष्ट हो या शुभराशि स्थित हो तो उसकी दशा मे धन प्राप्ति तथा पुत्रोत्पत्ति होती है॥२८॥ (ग्रहो की शत्रुराशि) सूर्य की शत्रुराशि २।६।७।१०।११ हैं। चन्द्रमा की शत्रुराशि ७।८।११ तथा मगल की शत्रु राशि॥२९॥ ३।६।७।११।१२ हैं। इसके बाद बुध की शत्रु राशि ४।८।११।१२ हैं॥३०॥ गुरु की शत्रुराशि २।७।३।६ हैं। और शनि की शत्रुराशि १।५।८।९।४ हैं॥३१॥ तथा शुक्र की शत्रु राशि ४।५।८।९ हैं। इन शत्रु राशियो को ध्यान मे रखते हुए अन्तरदशा का विचार करे॥३२॥ जो ग्रह १-राजयोगकारक हैं तथा २-जो ग्रह शुभ ग्रहो के मध्य मे है एव ३-जिस ग्रह से त्रिकोण मे शुभग्रह हो वह ग्रह शुभफल देता है॥३३॥ १-राजयोग कारक ग्रह की दशा मे राजयोग के अनुसार जो शुभ फल होना सभव है वह शुभ फल होता है। २-इसी प्रकार दो शुभग्रहो के मध्य मे जो पापग्रह है वह भी शुभफलकारक ही है॥३४॥ अशुभग्रह की दशा मे शुभ ग्रह का अतर शुभ होता है। ३-इसी प्रकार जिस ग्रहके त्रिकोणस्थ शुभग्रह हो उसकी दशा भी शुभफलदात्री होती है॥३५॥ जिस पापदशाका आरभ (दशा) और अत (दशा) शुभ या मित्रराशिकी दशामे हो तो वह दशा भी शुभफल देनेवाली होती है। इसी प्रकार प्रति राशि एक २ वर्ष चलाना चाहिए॥३६॥

आरभात्तत्त्रिकोणे तु सौम्ये तु शुभमावहेत् ॥ शुभराशौ शुभारभे दशा स्यादतिशोभना ॥३७॥ शुभादिदाशौ पापश्चेद्दशारभे शुभो द्विज ॥ शुभारभे का कथेति आरभस्य शुभ भवेत् ॥३८॥ नीचारौ तद्दशाद्यत भाग्यं भाग्यविपर्ययः ॥३९॥ यत्र स्थितो नीचखेटस्त्रिकोणे वाथ राशियः ॥४०॥ तदा राशीश्वरे नीचे संबंधो नीचखेटकैः ॥ भाग्यस्य विपरीतत्व करोत्येव द्विजोत्तम ॥४१॥ राहोः केतोश्च कुंभादि वृश्चिकादि चतुष्टयम् ॥ कुभे तत्र समारभस्तद्दशायां शुभं भवेत् ॥४२॥ मद्दशायां शुभं ब्रूयात्तंचेन्मकरसंस्थितः ॥ यस्मिन्राशौ दशांतः स्यात्तस्मिन्नृष्टे युतेपि वा ॥४३॥ शुक्रेण विधुना वा स्याद्राजकोपाद्धनक्षयः ॥ दशांतश्चेदरिक्षेत्रे राहुदृष्टियुतेपि वा ॥४४॥ इदं फल शनेः पाके न विचिन्त्य द्विजोत्तम ॥ दशाप्रदे नक्रराशौ न विचिन्त्यमिदं फलम् ॥४५॥

आरम्भिक राशि से त्रिकोण मे शुभग्रह हो तो शुभफल होता है। मूलदशा भी शुभ हो और अन्तरदशा भी शुभ हो तो अतिशुभ फल होता है॥३७॥ शुभराशि मे पापान्तर भी जब शुभ हो सकता है। तब शुभराशि मे शुभान्तर के शुभ होने मे तो कहना ही क्या है॥३८॥ दशा के आदि तथा अन्त मे नीच, अशुभ ग्रहयोग युक्त राशि का अन्तर हो तो भाग्य का विपर्यय (उलटा निकृष्ट होना) ही जानना ॥३९॥ जिस राशि मे अथवा जिस राशि के त्रिकोण

नीचस्थ ग्रह हो॥४०॥ तथा जब दशाराशि का स्वामी नीच ग्रह हो, अथवा नीचग्रहों से सम्बन्ध हो तब हे द्विजोत्तम! भाग्यभाव की हानि ही करता है॥४१॥ राहु तथा केतु के लिए क्रमश कुंभादि चार तथा वृश्चिकादि चार राशियो मे दशा का आरभ हो तो दशा शुभ होती है॥४२॥ जिस दशा को शुभ माना जाय वह दशा यदि मकर राशि की हो अथवा दशांत राशि यदि राहु केतु से दृष्ट या युक्त हो॥४३॥ अथवा शुक्र या चन्द्रमा से युक्त या दृष्ट हो तो राजा के कोप से धन क्षयकारी दशा जानना। यही फल जहा शत्रुराशि मे दशा का अत होता हो अथवा राहु की दृष्टि से युक्त या दृष्ट हो तो भी जानना॥४४॥ यह फल शनि की दशा मे तथा मकर राशि दशा मे नही देखना॥४५॥

राहोर्दशांते सर्वस्य नाशो मरणबधने । देशान्निर्वासनं वा स्यात्कष्टं वा महदश्नुते ॥४६॥
तत्त्रिकोणगते पापे निश्चयाद्दुःखमादिशेत् ।।एवं शुभाशुभं सर्व निश्चयेन वदेद्बुधः ॥४७॥
राह्वादिस्थितराशिः स्याद्दशाप्रदो भवेन्नरः ॥ तत्र कालेपि पूर्वोक्तं चिंतनीयं प्रयत्नतः ॥४८॥
दशारंभो दशांतो वा मकरे चेत्तुशोभनम् ॥ तस्मिन्नेव च राहुश्चेन्निरोधी द्रव्यनाशनः ॥४९॥
यत्र क्वापि च भे राहौ दशारंभे विनाशनम् ॥ गृहभ्रंशः समुद्दिष्टो धने राहुधनीभृतः ॥५०॥
चंद्रशुक्रौ द्वादशे चेद्राजकोपो भवेद् ध्रुवम् ॥ भौमकेतू तत्र यदि वध्याग्नेर्महती व्यथा ॥५१॥
चन्द्रशुक्रौ धनेविप्र यदि राजा प्रयच्छति ॥ दशारंभेन्तरस्याश्च द्वितीयस्थमिव फलम् ॥५२॥
एवमर्गलफलार्थे च ब्रह्मदेवप्रदर्शितः ॥ यस्य पापः शुभो वापि ग्रहस्तिष्ठेच्छुभार्गले ॥५३॥ तेन दृष्टेक्षित लग्न प्राबल्यायोपकल्पते ॥ यदि पश्येद्ग्रहस्तत्र विपरीतार्गलस्थितिः॥५४॥ सोपि दृष्टस्थिते लग्ने विपरीते फल भवेत् ॥ तद्दृष्टेऽपि शुभ ब्रूयान्निर्विशंक द्विजोत्तम॥५५॥

इति बृहत्पाराशरहोराशास्त्रे पूर्वखण्डे चरदशाफलकथन नाम
षट्चत्वारिंशोऽध्यायः ॥४६॥

राहु की दशा के अन्त मे सर्वस्व का नाश तथा मरण एव बधन होता है। या देशत्याग अथवा महान् कष्ट होता है॥४६॥ और राहु या दशाप्रद राशि से त्रिकोण स्थान मे पापग्रह हो तो निश्चय ही दु ख होता है। इस प्रकार कही हुई रीति से सब योगायोगो का विचार करके निश्चित फल कहना चाहिए॥४७॥ यदि दशाप्रद राशि राहु आदि पापग्रह युक्त हो तो उस दशा मे भी पूर्वोक्त अशुभ फल होता है॥४८॥ दशा का आरभ और अन्त मकर राशि मे हो तो शुभफल होता है। और उसी राशि मे यदि राहु हो तो शुभफल का निरोध करके धननाश कारक होता है॥४९॥ जिस राशि मे राहु हो उस राशि की दशा नाशकारक होती है। यदि राहु धन स्थान मे हो तो धनी मनुष्य के भी घर का नाश करता है॥५०॥ चन्द्र तथा शुक्र जिस राशि के १२ भाव मे हो तो राजकोप होता है। यदि १२ स्थान मे भौम और केतु हो तो अग्नि से मृत्यु या व्यथा होती है॥५१॥ चन्द्रमा और शुक्र यदि धन राशि मे हो तो राजा से धनलाभ होता है। दशा के आरभ तथा अन्त मे भी धनलाभ होता है॥५२॥ जैसे स्थान आदि के द्वारा जो योग और फल दशाप्रद राशि के लिए कहे गये हैं, वे सब योग अर्गला योग के विचार मे भी प्रयुक्त करना चाहिए। ऐसा ही प्रथम ब्रह्मा ने कहा है। जिस दशाप्रद राशि मे

अर्गला मे पाप या शुभ ग्रह हो॥५३॥ उस ग्रह से यदि लग्न दृष्ट या युक्त हो तो योग की प्रबलता समझना। इसी प्रकार अर्गला के प्रतिबन्धक योग मे भी यदि कोई ग्रह की दृष्टि हो तो ॥५४॥ वह योग भी दृष्ट या युक्त लग्न के लिए विपरीत योग होने पर विपरीत फलकारक होता है। और शुभयोग यदि प्रतिबंधित नही हो तो शुभ फल निःसन्देह होता है॥५५॥

इति श्रीनृ० पा० हो० शा० पू० भावप्रका० चरदशाफलकथन नाम
षट्चत्वारिंशोऽध्याय ॥४६॥

## अथ दशावाहनमाह

अधुना सप्रवक्ष्यामिदशावाहनमुत्तमम् ॥ प्राणिना च हितार्थाय कथयामि तवाग्रत ॥१॥ गर्दभो घोटको हस्ती महिषो जम्बुसिहको ॥ काको हसो मयूरश्च नवैते नरवाहना ॥२॥ स्वकीयजन्मनक्षत्राद्गणयेलग्नभावधि ॥ नवभिस्तु हरेद्भाग शेष तु राशिवाहनम् ॥३॥ दशाप्रवेशे खरवाहनश्च उत्पन्नभोगी जडतासमेत ॥लज्जाविहीनो धनधान्यहीन स्यान्मानवो वस्त्रविवर्जितश्च ॥४॥ चपलचचलता बहुभक्षक प्रकटबुद्धिसघोषचमूपति ॥ दृढतनुर्बहुकार्यकर परस्तुरगयोर्यदि वाहनसस्थित ॥५॥

### दशावाहन कथन

अब दशा वाहन का उत्तम प्रकरण कहते हैं जिससे प्राणियो का हित हो॥१॥ गर्दभ घोड़ा, हाथी, महिष, जम्बु (सियार) सिंह काक (कौवा), हस, मयूर ये नौ दशा के वाहन है॥२॥ अपने जन्म नक्षत्र से लग्नस्पष्ट के नक्षत्र तक गणना करके ९ का भाग देना। शेष रह सो वाहन जानना॥३॥ दशाप्रवेश मे यदि गर्दभ वाहन हो तो कमाई होने पर खानेवाला मूर्ख, लज्जाहीन, धनधान्यहीन, वस्त्रादि हीन दीन होता है॥४॥ यदि अश्व हो तो चपल, चचल, बहुभक्षी, बुद्धिमान्, शब्दकारी, सेनापति तथा दृढशरीरवाला परम उद्यमी होता है॥५॥

नानाकार्यकृतो हि मूर्खजननो देवाधिपो वाहन सतप्तो बहुठानताशुभगति सेनापति शोभन ॥६॥ सर्वं सौख्यकर सुभूषणधर स्याच्चचलो दुष्टता पाकोय यदि वाहनो गजपतेर्नानाकलाकौशल ॥७॥ महिषयोर्बलबुद्धिविहीनता जयभय प्रबलाग्निभयातुरम् ॥ कटकभो प्रबले बलखण्डितो महिषयोर्यदि वाहनता भवेत् ॥८॥ जबुके बहुतरैव चचला व्याधिदु खपरिपीडितागना ॥ क्लेशता रिपुजनाच्च पीडन धान्यनाशमतिसक्षयो भवेत् ॥९॥ दशाप्रवेशे यदि वाहनश्च सिहो बलिष्ठो विविधै प्रकारै ॥ उत्पन्नभोगी रिपुनाशकारी स्याद्वाहने केसरिणा विशेष ॥१०॥ काके वाहनसस्थिते यदि दशा स्याच्चचलो निर्भयो वासारो मलिन कुवेषधरितो नीचैर्जनै पूजित ॥ स्थाने राजभय तथारिपुभय मानापमान नरा दुष्टार्ति कलह कुचेष्टितनर स्त्रीद्वेषकारी भवेत् ॥११॥ अनकसारनिधिकेलिसमन्वितो द्विजपतेर्बहुजात्मसुखान्वित ॥ सदशने मतिना प्रबलायिता सुकयिता खलुहसपवाहन ॥१२॥

मयुरवाहनतो बहुलं सुखं धृतिकलाकुशलोऽमलकेलिकृत् ॥ मधुरवाक्ययुतो मधुरप्रियः सदसमेन नरस्य समन्वितः ॥१३॥

यदि जातक की दशा का वाहन हाथी हो तो अनेक कार्याकार्यकारी मूर्ख चिन्तित हठी किन्तु शुभगति तथा योग्य सेनापति सुन्दर सजीला॥६॥ सुखकारी, चचल एव अनेक कला कौशल वाला होता है॥७॥ यदि दशा का वाहन महिष हो तो जातक बुद्धिवल से हीन प्रवल अप्रिभय से आतुर, दो लडनेवाले साडो की तरह लडाई मे सबसे आगे रहता है॥८॥ यदि सियार दशावाहन हो जो जातक अतिचचल व्याधि दु खपीडित स्त्रीवाला, क्लेशयुक्त तथा शत्रु से पीडित तथा धनधान्यहीन होता है॥९॥ यदि सिंह दशावाहन हो तो जातक बलवान् तथा अनेक रीति से भोगो को प्राप्त करनेवाला, शत्रुहन्ता होता है॥१०॥ यदि कौवा वाहन हो तो जातक चचल निर्भय पर्यटनप्रिय मलिन कुवेशधारी नीचजनो मे सगतिवाला तथा राज एव शत्रुभययुक्त, मानापमान मे समान, रोगी,कलह कामी, कुचेष्टाकारी तथा स्त्री का द्वेषी होता है॥११॥ यदि हस वाहन हो तो अतीव सुन्दर कलाप्रेमी, बहुत सन्तान सुखयुक्त सभा चतुर, प्रबल मतिमान् होता है॥१२॥ मयूर वाहन हो तो बहुत सुखी, धैर्यवान्, कलाकुशल, क्रीडा प्रेमी, मधुरभाषी मधुरभोजन प्रिय होता है॥१३॥

## अथ सुदर्शनचक्रमाह

विश्वचक्र कालचक्र दिव्यचक्र सुदर्शनम् ॥ विष्णोः कराबुजावासमीडे तज्ज्ञानमद्भुतम् ॥१४॥

## पुनः समस्तज्योतिःशास्त्रतत्त्वकामधेनुरूपं सुदर्शनचक्रमाह

सुदर्शन द्वादशारं जन्मभेद्वर्कराशितः ॥ केन्द्रकोणाष्टगो राहुः पापास्यैं च शुभो मुदे ॥१५॥ तत्स्वार्धवर्षमासाद्यद्वपेकयथ्रान्प्रवर्तयेत् ॥ विरिष्फारिशुभैः पापैस्त्रिषडायेषु वै शुभम् ॥१६॥ तं त भाव प्रकल्प्यांगं तत्तत्त्वादिज फलम् ॥ गुरूपदेशात्संबाध्यं भोजन स्वप्नपूर्वकम् ॥१७॥ भायेशादिद्वादशाना वशवर्गेषु कल्पयेत् ॥ तदाद्यतर्दशास्तद्वन्मासादौ तद्बलैः शुभा. ॥१८॥ सुदर्शन द्वादशार वृत्तत्रयसमन्वितम् ॥ पूर्ववृत्ते जन्मलग्नाद्भावा खेचरसयुताः ॥१९॥ तदूर्ध्ववृत्ते चन्द्राच्च भावाः खेटसमन्विताः ॥ तदूर्ध्ववृत्ते सूर्याच्च भावा लेख्या सखेचराः ॥२०॥

### सुदर्शन चक्र

जो विश्व-ससार का चक्र समयफलसूचक है, देवता भी जिसे चाहे ऐसा यह सुदर्शन नामक चक्र के समान ज्योतिषशास्त्र का सारभूत चक्र है, अत सर्वश्रेष्ठ होने से इसकी प्रशसा करते है। भगवान् विष्णु के करकमल मे रहनेवाले चक्र की वन्दना करते है॥१४॥ समस्त ज्योतिषशास्त्र का तत्व कामधेनु के समान यह सुदर्शन चक्र है। १२ कोष्टक का चक्र बनावे। उसके (अतर्बाह्यरूप से तीन विभाग करे) अन्तर के भाग मे जन्मकुडली, मध्य मे चन्द्रकुण्डली, बाह्यचक्र मे सूर्यकुण्डली लिखे। उसमे देखना कि केन्द्र, त्रिकोण तथा अष्टम भाव मे राहु या पापग्रह हो तो दु खदायी और शुभग्रह हो तो सुखदायक होते है॥१५॥ प्रत्येक कोष्टक मे प्रति कोष्टक १-१ वर्ष तथा मास एव २॥-२॥ दिन की आवृत्ति करे। छठे तथा बारहवे घर मे शुभग्रह न हो और ६।३।११ मे पापग्रह हो तो शुभ

है।।१६।। प्रत्येक भाव को तद्भावज फल विचारार्थ लग्न कल्पना करके उस उस भाव से उसके फल का निर्देश करे। गुरु के उपदेशानुसार प्रातःकाल से शयनकाल तक का फल कहना चाहिए।१७।। द्वादश भावों में प्रथम प्रत्येक भाव में १०-१० वर्ष की कल्पना करे। पश्चात् उनमें १०-१० मास की अन्तर्दशा जिस भाव की दशा होगी उसी भाव से आरंभ होगी।।१८।। यह सुदर्शन चक्र बारह कोष्ठक का है। तीन वृत्त (घेरे) से युक्त है। पहले वृत्त में जन्म लग्न से १२ भाव लिखें और यथास्थान ग्रह लिखें।।१९।। उसके ऊपर के वृत्त में चन्द्रराशि से भाव और ग्रह लिखें। उसके ऊपर सूर्यराशि से भाव और ग्रह लिखें।।२०।।

वृत्तत्रयेऽपि ये खेटा यत्र राशौ व्यवस्थिताः ।। ते तत्र सलेख्यास्तस्माद्भावान्निरीक्षयेत् ।।२१।। यद्यद्वृत्ते च यद्भावात्केन्द्रकोणाष्टगस्तमः ।। पापा वा यत्र बहवस्तत्तद्भावविनाशनम् ।।२२।। यत्र भावे सैंहिकेयोऽवश्यं तद्भावहानिः ।। यस्माद्भावात्केन्द्रकोणाष्टमे सौम्या शुभप्रदा ।।२३।। तदा तद्भाववृद्धिः स्यात्त्रिवृत्तेऽपि शुभा ग्रहाः ।। केन्द्रादिस्थानगास्ते चेच्छुभाधिक्यफलप्रदा ।।२४।। तथा पापखगास्तत्र पापारिष्टफलप्रदा ।। शुभेन वीक्षिता सौम्य फलं तद्भावजं समम् ।।२५।।

इति श्रीबृहत्पाराशरहोराशास्त्रे चरदशाफलादि कथनं
नाम सप्तचत्वारिंशोऽध्यायः ।।४७।।

(पूर्वखण्डः समाप्तः)

तीनों वृत्तों में जो ग्रह जिस भाव में हो वही लिखें। पश्चात् देखें।२१।। जिस जिस वृत्त में जिस जिस भाव से केन्द्र त्रिकोण तथा अष्टमभाव में राहु हो या बहुत पापग्रह हों तो उस उस भाव का नाश होता है।।२२।। और जिस भाव में राहु हो उसका अवश्य ही नाश होता है। जिस भाव से केन्द्र त्रिकोण तथा अष्टम में सौम्य ग्रह हो वह भाव श्रेष्ठ है।।२३।। तो उस भाव की वृद्धि होती है। तीनों वृत्तों में यदि शुभग्रह केन्द्र त्रिकोण भाव में हों तो अधिक शुभ फलप्रद होते हैं।।२४।। यदि उन स्थानों में पापग्रह हो तो दुःख अरिष्ट फल देनेवाले होते हैं। और यदि वे पापग्रह शुभग्रहों से दृष्ट हों तो समान फल होता है।।२५।।

उदाहरण चक्र
सुदर्शन चक्र सम्बन्धी श्लोकों का तात्पर्यार्थ--
एक चक्र इस प्रकार बनाना चाहिए जिसमें १२ १२ घरों के ३ चक्र हों जिसका चित्र इसमें दिखाया गया है। उसमें भीतर के १२ घरों में ग्रह सहित लग्नकुण्डली, बीच के १२ घरों में ग्रह सहित चन्द्र कुण्डली तथा ऊपर के १२ घरों सहित सूर्य कुण्डली लिखना। अब यह चक्र तैयार है। इसमें अपने शरीर के लिये लग्न से तथा अन्य विचार के लिये उन उन पदार्थों के भाव को लग्न कल्पना करके तत् तत् भावों से विचार करना चाहिए। यह ऊपर कहा जा चुका है कि केन्द्र त्रिकोण तथा अष्टम भाव में राहु और पापग्रह अशुभ हैं। तथा शुभग्रह शुभ हैं। इस ग्रह स्थिति के विचार में स्वगृही मित्रगृही, उच्च परमोच्चस्थ, मूल त्रिकोणस्थ स्वनवांशस्थ तथा शुभ वर्ग आदि ग्रह से तत्तत् भाव का फल शुभ एवं नीच परम नीच, शत्रु राशिस्थ अस्त, शत्रु

नवांशस्थ, शत्रु वर्गस्थ, पापयुत अथवा दृष्ट ग्रह अशुभ फलदायक होता है। इस विचार में शुभ, पापग्रहों की दृष्टि का भी विचार करना चाहिए। प्रत्येक ग्रह की दृष्टि जितने पाद हो, शुभ और पाप की अलग अलग योग कर, शुभ और पापग्रहों की दृष्टि का अन्तर करके जो अधिक रहे उसके अनुसार शुभाशुभ फल कहना चाहिए।

इस चक्र में मनुष्य की पूर्णायु १२० वर्ष की संख्या को प्रथम १२ भागों में बांट कर चक्र के १-१ घरमें १०-१० वर्षकी कल्पना करे। प्रत्येक घरके वर्षों में उपर्युक्त ग्रह स्थिति के अनुसार शुभाशुभ फल का निर्णय करे तथा प्रत्येक १० वर्ष में अन्तरदशा रूप से १०-१० मास उस उस भाव से १२वें भाव तक कल्पना करे और ग्रह स्थिति के अनुसार फल का निर्णय करे। यह एक प्रकार है।

दूसरा प्रकार—चक्र के १२ भावों में जन्मलग्न से प्रत्येक भाव में १ १ वर्ष की कल्पना करे। इस प्रकार १० आवृत्ति होने से १२० वर्ष की संख्या पूरी होती है। इसकी अन्तरदशा प्रत्येक भाव के १-१ वर्ष के १२ भाग कल्पना करके १-१ मास १-१ भाव पर समझना चाहिए। इसका आरम्भ अपने उसी भाव से करना चाहिए कि जिसकी अन्तरदशा देखनी हो। इसी प्रकार १ मास के भी १२ भाग करने से २॥-२॥ दिन होते हैं। उनका विचार भी १२ भावों पर पूर्ववत् प्रत्यन्तर दशा के रूप में करना चाहिए। इसी प्रकार सूक्ष्मान्तर १२॥ घटिका और प्राणान्तर प्रायः १-१ घटिका का तत्तत् भाव पर कल्पना करके उपर्युक्त ग्रह योगानुसार वर्ष, मास, दिन, घटी तक का शुभाशुभ फल निर्णय कर सकते हैं। यह सुदर्शन चक्र सरल रूप से जातक का भूत भविष्य तथा वर्तमान सुख दुःख निर्णय करने में अत्यन्त उपयोगी है। और ज्योतिर्विदों के लिये कामधेनु रूप है।

## अथ राहुदृष्टिमाह

**सुतमदननवान्ते पूर्णदृष्टिं तमस्य युगलदशमगेहे चार्धदृष्टिं वदन्ति। सहजरिपुविपश्यन्पादृष्टिं मुनीन्द्रा निजभवनमुपेतो लोचनाधः प्रदिष्टः ॥२६॥**

**राहु दृष्टि**

राहु की दृष्टि पंचम, सप्तम नवम में पूर्ण। २।१० में अर्ध दृष्टि। ३।६ में पाद दृष्टि। और अपने भाव में दृष्टि हीन होता है॥२६॥

## अथ ग्रहाणामुदयवर्षाण्याह

**आकृत्यो २२ जिन २४ समिता गजकरा २८ नेत्राग्नय ३२ षोडश १६ स्तत्वा २४ स्त्यग्गुणा ३६ द्विवेद ४२ प्रमिता सूर्यादिकानां समा ॥ यत्खेट स्वगृहे स्वतुङ्गभवने षड्वर्गशुद्धश्चयस्त- स्याब्दे हि नृणां भवेदतिसुखं भाग्योदयो निश्चितम्॥२७॥**

**ग्रहों के भाग्योदय वर्ष**

सूर्यादि ग्रहों के ये वर्ष भाग्योदय के लिये नियत हैं॥ २२,२४,२८,३२,१६,२४,३६ और ४२ हैं॥ जो ग्रह अपने घर में उच्च स्थान में, षड्वर्ग में शुभ हो, उसी ग्रह के अनुसार उस जातक का भाग्योदय ऊपर कथित ग्रह के वर्ष में निश्चित जानना॥२७॥

इति श्रीबृहत्पाराशरहोराशास्त्रे पूर्वखण्डे ज्योतिर्वित्प० श्रीरामनारायणात्मजताराचन्द्र- शास्त्रिविरचितायां भावप्रकाशिकाटीकायां सप्तचत्वारिंशोऽध्यायः ४७॥

**समाप्तश्चायं पूर्वखण्डः ॥ श्रीरस्तु ॥**

# अथ उत्तरखण्ड प्रारभ्यते

**मैत्रेय उवाच—भगवन्सर्वमाख्यातं जातकं विस्तरेण मे ॥ सप्तसहस्रायुतग्रंथैरशीत्यध्यायसंयुतैः ॥१॥ संकरात्तत्फलानां तु ग्रहाणां गतिसंकरात् ॥ नान्येन हीदमस्येदमिति वक्तुमलं नराः ॥२॥ कलौ युगे ततोऽस्यैव बुद्धिः पापोत्तरा नराः ॥ अतो न चास्य प्रचयगमनं न प्रयोजनम् ॥३॥ अत्र त्रेतायुगे केचिद्द्वापरे च कृते युगे ॥ कुशाग्रमतयः सर्वे पुण्यभाजश्चिरायुषः ॥४॥ अतोऽल्पबुद्धिगम्यं यच्छास्त्रमेतद्वदस्व मे॥ लोकयात्रापरिज्ञानमायुषो निर्णयं तथा ॥५॥**

## उत्तरखण्ड प्रारंभ

मैत्रेयजी ने कहा-हे भगवन्! पूर्वभाग मे आपने ८० अध्यायो के ११,००० श्लोको से जातकशास्त्र का विस्तारपूर्वक वर्णन किया है॥१॥ किन्तु ग्रहों की गति आदि का विचार अति कठिन होने से फलनिर्णय करना अति कठिन है॥२॥ क्योकि-फलनिर्णय के प्रकार अति विस्तृत और दुरूह है, अत सरल सुबोध प्रक्रिया युक्त फलनिर्देश का प्रकार कहिये कि जिसके अनुसार कार्य करने से फलज्ञानरूप प्रयोजन सिद्ध हो॥३॥ सत्ययुग, त्रेता, द्वापरयुगों मे तो मनुष्य दीर्घायु परम मेधावी तथा पुण्यात्मा थे अत वे इस गहन ग्रन्थ से फलनिर्देश करने मे भी समर्थ थे॥४॥ परन्तु इस कलियुग मे तो (वैसे दीर्घायु और तीक्ष्ण बुद्धि सम्पन्न मनुष्य न होने से) सर्वसाधारण बोधगम्य सरल मार्ग का उपदेश करिये, जिससे मनुष्यो को सुख दुःख का ज्ञान हो और आयु के निर्णय का प्रकार भी विस्तार पूर्वक कहिये॥५॥

**पराशर उवाच-साधु पृष्टं त्वया ब्रह्मन्वदामि तव सुव्रत ॥ लोकयात्रापरिज्ञानमायुषो निर्णयं तथा ॥६॥ सकरस्याविरोधं च शास्त्रस्यापि च सिद्धये ॥ प्रयोजनस्य लोकानामुपकाराय तच्छृणु ॥७॥ लग्नादिव्ययपर्यंता भावाः सम्यगनुरूपतः ॥ फलदाः शुभसदृष्टा युक्ता वा शोभना मताः ॥८॥पापदृष्टयुता भावाः कल्याणेतरदायकाः ॥ नितरां शत्रुनीचस्थैर्न च मित्रोच्चगैश्च तैः ॥९॥ एवं सामान्यतः प्रोक्तं होराविद्भिस्तु सूरिभिः ॥ मयैतत्सकलं प्रोक्तं पूर्वाचार्यानुवर्तिना ॥१०॥ आयुश्च लोकयात्राश्च शास्त्रेऽस्मिंस्तत्प्रयोजनम् ॥ निश्चेतुं तन्न शक्नोति वसिष्ठो वा बृहस्पतिः ॥११॥ किं पुनर्मनुजास्तत्र विशेषात्तु कलौ युगे ॥ नष्टादिषु च नातीव द्रेष्काणादिफलेषु च ॥१२॥**

पराशरजी ने कहा-हे मैत्रेय! आपने सुन्दर प्रश्न किया है, अब हम वह शास्त्र कहते हैं कि जिससे जातक का शुभाशुभ तथा आयु का ठीक ठीक ज्ञान हो॥६॥ और तुमने जो यह कहा है कि-पूर्वभाग मे वर्णित रीति से फलनिर्णय अतिकठिन हो गया है सो उसकी भी स्पष्टता के लिए तथा विरोध परिहार के लिए भी विशेषरूप से वर्णन करते हैं॥७॥ इस शास्त्र मे लग्न आदि १२ भाव ही फलादेश के मूल हैं। वे शुभग्रहयुक्त या दृष्ट हो तो शुभफल, अशुभ (पाप) ग्रहयुक्त या दृष्ट हो तो अशुभ फल देते है॥८॥ उसमे भी शत्रु, नीच अस्त मे युक्त दृष्ट मे नेष्ट फल की अधिकता और मित्र, उच्च, स्वगृही आदि युक्त, दृष्ट मे शुभ फल की अधिकता होती

है॥९॥ जैसे पूर्वाचार्यो ने कहा है उसी प्रकार से हमने कहा है॥१०॥ यह ज्यौतिष शास्त्र अति गम्भीर और दुर्बोध है, मनुष्यों का शुभाशुभ तथा आयुनिर्णय मे महान् आचार्य भी असमर्थ हैं, साधारण मनुष्य तो कैसे समर्थ हो सकते हैं॥११॥ और नष्ट वस्तु ज्ञान मे तो द्रेष्काण, नवांश आदि के विचार द्वारा फल कहना तो अतिकठिन है॥१२॥

आचार्यस्य मुखादेतच्छास्त्रं तु शृणुयाद्बुधः ॥ संप्रदायेन यः श्रांतश्चास्मिञ्छास्त्रे महामतिः ॥१३॥ कर्मज्ञानविदा वेदो द्विधा यद्वत्तदाऽह्वये ॥ होराशास्त्रं द्विधा प्रोक्तं सकीर्णनिश्चयादिति ॥१४॥ प्रोक्तः संकीर्णभागस्तु निश्चयांशस्तु कथ्यते ॥ यो वेत्ति सम्यगेतत्तु दैवज्ञः स उदाहृतः ॥१५॥ भावदृष्ट्यादिषु प्रोक्तानर्थान्सम्यग्विचार्य च ॥ समीचीनांस्तु संगृह्य विरुद्धांस्तु परित्यजेत् ॥१६॥ आयुर्दायैः परं योगैः फलान्यष्टकवर्गतः ॥ तन्वादीनां तु भावानां सूक्तैर्भावादिभिः फलैः ॥१७॥ ज्ञात्वाऽऽदौ करणं स्थान बिंदुरेखे च वर्गणाम् ॥ क्रमादष्टकवर्गस्य पृथक्कृत्य फलं वदेत् ॥१८॥

अत यह शास्त्र गुरुमुखद्वारा अध्ययन करके परिशीलन करने से उत्तरोत्तर ज्ञान विशद होगा॥१३॥ यह शास्त्र वेद के समान ही हं, जैसे वेद ज्ञान और कर्म का प्रतिपादक है उसी तरह यह शास्त्र भी १–'सकीर्ण' और २–'निश्चय' भेद से दो प्रकार का है॥१४॥ उसमे सकीर्ण भाग पूर्वखण्ड मे कहा जा चुका है और 'निश्चय' भाग अब कहते है॥१५॥ जन्मलग्न आदि १२ भावो पर जो सप्तम आदि स्थानो मे पूर्णदृष्टि आदि दृष्टि कही गई है, उसका स्पष्ट करके शुभ दृष्टि मे पापदृष्टि हीन करके शुभफल निर्णय करना॥१६॥ पश्चात् प्राप्त शुभाशुभ के निर्णय के लिए प्रथम आयु का परिमाण देखना चाहिए (क्योंकि आयु ही नही होगी तो शुभाशुभ फल को भोगेगा ही कौन?) बाद शुभाशुभयोग और अष्टकवर्ग जन्य फल बलानुसार निश्चित करना॥१८॥

तनुस्वायुस्त्रिरिष्फेषु पंच कामे सुरेर्णवाः ॥ अरौ भाग्ये त्रयः पुत्रे षट् करो खे भवे च भूः ॥१९॥ लग्नेंदुजीवशुक्रास्तनौ खेमरणेपिच ॥ रविभौमार्किचद्रार्या व्यये नेंदुसितार्यकाः ॥२०॥ सुखे होरेंदुशुक्राश्च धर्मेकार्किकुजा अरौ ॥ होरमार्येन्दवः कामे भवे दैत्येड्पूजितः ॥२१॥ सहजेकार्किशुक्रार्यभौमाःखे गुरुमार्गवौ ॥ सुतेर्कार्किन्दुलग्नारशुक्राः स्युः करणं रवेः ॥२२॥

(अब 'अष्टक वर्ग' का फलाफल निर्णय करने के लिए सूर्यादि सात ग्रह और लग्न इनकी बिन्दु तथा रेखा के स्थान सबके भिन्न भिन्न कहते है। इस प्रकरण मे बिन्दु की 'करण' सज्ञा है। और रेखा की 'स्थान' सज्ञा है) प्रथम सूर्य की करण सख्या कही जाती है। सूर्य मे प्रथम, द्वितीय, तृतीय, अष्टम, द्वादश भाव मे पाच पाच करण है। चतुर्थ, सप्तम मे चार चार करण। तथा छ नौ मे तीन २ करण। पचममे छ करण। दशममे दो करण। एकादशमे एक करण होता है॥१९॥ अब नाम कहते हैं। सूर्य से-प्रथम, द्वितीय, अष्टम मे लग्न, चन्द्र, बुध, गुरु, शुक्र ये ५ करण देते हैं। चतुर्थ मे चन्द्र, बुध, गुरु, शुक्र ये चार ग्रह करण देते हैं। नवम मे-लग्न, चन्द्र, गुरु ये तीन। छठे भाव मे सूर्य, मगल, शनि ये तीन करण देते है। सप्तम भाव मे लग्न, चन्द्र, बुध,

गुरु ये चार करणदाता। तृतीय मे सूर्य, मगल, गुरु, शुक्र, शनि ये पाच ग्रह। दशम मे गुरु, शुक्र ये दो पचभाव मे लग्न, सूर्य, चन्द्र, मगल, शुक्र, शनि ये छ करण देनेवाले ग्रह है। बारहवे मे सू० च० म० गु० श० ये ५ हैं। ग्यारहवे मे शुक्र १। यह सूर्य की करण सख्या तथा नाम हैं॥२०॥२१॥२२॥

भाग्यस्वयोश्च षड्वेश्म मृतिहोरासु पच च ॥ मानदुश्चिक्ययोरेकः सुते वेदा अरिस्त्रियो ॥२३॥
त्रयो व्ययेष्टावाये च शून्य शीतकरस्य तु ॥ होरार्कारार्किभृगवोगज्ञार्केन्द्वार्किमार्गवाः ॥२४॥
जीवोर्कार्कीन्दुलग्नाराहोरेंदुगुरुभास्करौ ॥ सितज्ञार्या कुजतनुर्मंदास्ते सितशीतगु ॥२५॥

चद्रमा की करण सख्या—चन्द्रमा से २।९ मे करणसख्या छ है। १।४।८ भाव मे पाच। ३।१० मे १। पचमभाव मे ४,६।७ भाव मे ३ हैं। १२ वे भाव मे करण सख्या ८ है। तथा ११ भाव मे करण सख्या नही है॥२३॥ (करण नाम) करण देनेवालो के नाम-चन्द्रमा से प्रथम घर मे लग्न, सूर्य, मगल, शुक्र, शनि ये पाच है। दूसरे घर मे लग्न, सू० च०, बु०, शु० श० ये छ हैं। तीसरे मे गुरु एक ही है। चौथे मे लग्न सू० च० म० श० ये ५ हैं। पाचवे घर मे लग्न सू०, च० गु० ये ४ है। छठे घर मे बु० बृ० शुक्र ये ३ हैं। सातवे घर मे लग्न म० श० ये ३ हैं। आठवे घर मे लग्न च०, शु०, म०, श० ये ५ हैं। नवे घर मे लग्न सू० म० बु० गु० श० ये ६ हैं। दसवे घर मे श० १ है। ग्यारहवे घर कोई नही तथा बारहवे घर मे लग्न सहित सातो ग्रह करण देनेवाले है॥२४॥२५॥

होरार्कारार्किविज्जीवा शनि स सकला क्रमात्॥ व्ययवेश्मसुतस्त्रीषु षट् सप्त धनधर्मयो ॥२६॥ होरामृत्यो शरा वेदा विक्रमे खे त्रय अते ॥ द्वौ भवे शून्यमेव स्यात्करण भूमिजस्य तु ॥२७॥ कुजस्यार्कबुधिज्जीवसिता लग्नशनी च ते ॥ सितारगुरुमदा स्युर्धर्मोर्कपुत्रक विना ॥२८॥ चद्रारगुरुशुक्रार्किलग्नानि कुजभास्करौ ॥ मेंद्वर्कसितलग्नार्या एषु शुक्र विना तत ॥२९॥ विना शनि सप्तधर्मे सितेन्दुजा वियत्तत ॥ अकार्किजेदुलग्नारा करण प्रोच्यते क्रमात् ॥३०॥

| चन्द्रोत्पन्नार्थ ग्रहकरणकोष्ठकम् | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| | भा० | सू० | च० | म० | बु० | गु० | शु० | श० | ल० | स० |
| १ | त० | ० | ० | | ० | ० | ० | | | ५ |
| २ | धि० | ० | ० | | ० | ० | ० | ० | ० | ७ |
| ३ | दु० | | ० | ० | ० | ० | ० | ० | | ४ |
| ४ | सु० | ० | ० | | ० | ० | ० | | ० | ६ |
| ५ | पु० | | ० | ० | | ० | ० | ० | ० | ६ |
| ६ | रि० | | | ० | | | | ० | | २ |
| ७ | जा० | ० | ० | | ० | ० | ० | | ० | ६ |
| ८ | आ० | ० | ० | | ० | ० | ० | | ० | ६ |
| ९ | ध० | ० | ० | ० | ० | ० | ० | | ० | ७ |
| १० | क० | | ० | | ० | | ० | | | ३ |
| ११ | ए० | | | | | | | | | ० |
| १२ | व्य० | ० | ० | ० | ० | | | ० | ० | ६ |

